S. C. [illegible] 9.8.49.

॥ श्रीः ॥

# कालिदासीयनाटककथामञ्जरी ।

# Kalidaseeya Natakakathamanjari.

BEING A PROSE VERSION OF THE DRAMAS OF MALAVIKAGNIMITRA, VIKRAMORVASEEYA AND SAKUNTALA, RETAINING THE IDIOMS OF THE ORIGINAL

By

**Vidyasagar K. L. V. SASTRI,**

*Mahopadhyaya, Siromani, Sahityanipuna, etc.*

PUBLISHED BY

**R. S. VADHYAR & SONS,**

BOOK-SELLERS & PUBLISHERS,

ALPATHI – PALGHAT.

S. INDIA



Price 1 Re.

॥ श्रीः ॥

# ॥ कालिदासीयनाटककथामञ्जरी ॥



मालविकाग्निमित्र, विक्रमोर्वशीय, शाकुन्तल नाटकानां

गद्यविवर्तनम्



महोपाध्याय, शिरोमणि, साहित्यनिपुणाद्यनेकबिरुदभाजा

विद्यासागर, के. एल्. व्यासरायशास्त्रिणा

विरचिता



PUBLISHED BY

**R. S. VADHYAR & SONS,**

Book-Sellers, & Publishers,

KALPATHI-PALGHAT

1942



॥ श्रीः ॥

# ॥ कालिदासीयनाटककथामञ्जरी ॥



मालविकाग्निमित्र, विक्रमोर्वशीय, शाकुन्तल नाटकानां

गद्यविवर्तनम्



महोपाध्याय, शिरोमणि, साहित्यनिपुणाद्यनेकबिरुदभाजा

विद्यासागर, के. एल्. व्यासरायशास्त्रिणा

विरचिता



PUBLISHED BY

**R. S. VADHYAR & SONS,**

Book-Sellers, & Publishers,

KALPATHI-PALGHAT

1942



## Publishers' Note.

The high appreciations and the wide popularity that have been received for the works of Sri Vidyasagar K. L. V. Sastri from the eminent scholars throughout our country including the Indian States and Ceylon, have prompted us to request the Author to continue his valuable contributions to Sanskrit Literature.

The KALIDASEEYA NATAKA KATHA MANJARI is the First of the Series of this kind that Sri Sastriar has begun to edit. The other books are being got ready for publication and will be available shortly to the public.

Our heartfelt thanks are due to Sri P. S. Viswanatha Iyer, M. A., I. C. S., for his generous response to our request to write a foreword, which, we hope will considerably enhance the value of this book.

R. S. Vadhyar & Sons.

# INTRODUCTION

## ॥ गद्यं कवीनां निकषं वदन्ति ॥

It is a well known fact that ancient Sanskrit literature is lacking in works of prose. No classic author has attempted to remedy this defect. The reason for this state of things is stated by some critics to be that no proper place was assigned to prose in ancient times, and hence prose compositions were not widely appreciated. But this view appears to be incorrect, because it has, all along been held, "Prose is the touchstone of poets". Nor can it be said that prose was totally neglected in ancient days. Specimens of excellent prose are found in portions of Yajurveda, the Upanishads and in many places in the Puranas Patanjali makes mention of a prose work called Vasavadatta. The next important prose writings are those of Bana & Dandin,—the former with a high flow and artistic but difficult style and the latter with a little easier and simpler style,—but these works are too difficult to an ordinary student of Sanskrit.

My present endeavour is to create and develop an easy flowing style in simple prose, which will be useful to students of Sanskrit, while at the same time preserving as

far as possible, the original idioms and forms of expression of the classsic authors from whose works the stories are retold with desirable or necessary adaptations. How far the perfect beauty of the three dramas of the great poet Kalidasa, has been maintained in these stories, adapted from the originals, it is for the readers to judge. It may be superfluous here, to dwell upon the well-known merits and excellence of Kalidasa's dramatic works. It is my intention to bring out similar volumes of other classical authors such as Sri Harsha, Bhavabuti, Bhasa and others. If this present work is found useful to students of Sanskrit, the author will derive great satisfaction that his humble labours have been amply recompensed.

My thanks are due to Mr. P. S. Viswanatha Iyer, M. A., I. C. S., who with his profound and comparative Sanskrit study has in his foreword, given expression to his high appreciation of this humble endeavour of mine. I also thank the enterprising and well-known Publishers, Messrs. R. S. Vadhyar & Sons of Kalpathi-Palghat, for bringing out this publication in an attractive form.

Kumbakonam,
21-5—1942.

K. L. V. Sastri.

# ॥ विज्ञापना ॥



जानन्त एव जानन्ति कालिदासस्य भारतीम् ।
मधुव्रता इव परां मकरन्दस्य माधुरीम् ॥ १ ॥

सोपमा कालिदासस्य वाणीत्यन्यैर्निगद्यताम् ।
वयं तु तां निरुपमां ब्रूमः सर्वातिशायिनीम् ॥ २ ॥

त्रयीव भारती यस्य कृत्रिमान्यपदक्रमा ।
अधीयते सहृदयैः शिरश्चलनपूर्वकम् ॥ ३ ॥

तत्र यत्कालिदासीयं प्रसिद्धं नाटकत्रयम् ।
तदत्र गद्यबन्धेन प्रकाशीक्रियतेऽधुना ॥ ४ ॥

यद्यस्मिन्ननुरज्येत समुदायः सचेतसाम् ।
तदा भवेत् कृतार्थस्य ममायं सफलः श्रमः ॥ ५ ॥

के. एल्. व्यासरायशास्त्री

# FOREWORD

I have no pretensions to scholarship in Sanskrit to deserve the honour of being asked to write a Foreword for the Kalidaseeyanataka Kathamanjari of Sri Vyasaraya Sastriar; but I can claim to have as much love for Sanskrit as any Pandit, and I have also the pleasure of close personal acquaintance with the author, whose other works also I have perused with pleasure,—two things which can be held to justify such temerity on my part.

There have been any number of simplified readers for school-boys trying to convey to them the essence of the classics, which have only succeeded in taking away the thrill of first approach to the great masterpieces without creating a desire to better acquaintance with the originals. This work, however, is different. The only proper comparison is with Lamb's tales from Shakespeare, a work which has not been equalled, let alone bettered, though the literature on Shakespeare has been plentiful enough in all conscience for over four centuries. The secret, which Mr. Vyasaraya Sastri has happily rediscovered, is the ability not merely to narrate the story attractively, but to retain the felicity of the idiom of the original without the sacrifice of intelligibility or of naturalness.

The book therefore is not a mere rehash of the plays, but an attempt to reconstruct it, the sort of work that Kalidasa himself might have written if he had dealt with the same themes in prose. The work therefore will also repay perusal by the literary reader in Sanskrit, in addition to making an excellent text book for advanced students, and a good introduction to the lay reader who would like to read the originals for himself without a teacher.

The book, as the readers can see, has been got up with the usual excellence associated with the ventures of R. S. Vadhyar & Sons. The print is excellent, and the book is free from misprint, the bane of Sanskrit and Grantha publications in this country. I hope that the firm will continue to do good service to the Sanskrit loving public by bringing out such tales from other classics also.

*Kumbakonam,*
*15—5—'42.*

*P. S. Visvanatha Ayyar,*
*Indian Civil Service.*

॥ श्रीः ॥

# ॥ कालिदासीयनाटककथामञ्जरी ॥

---:o:---

## ॥ मालविकाग्निमित्रकथा ॥

---:o:---

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥

आसीत् पुरा मौर्याणामन्तिमस्य राज्ञो बृहद्रथस्य सेनापतिः पुष्पमित्रो नाम। बृहद्रथस्तावद् विषयाकृष्टहृदयः कापथे प्रवर्तमानो न प्रजानामनुरञ्जने प्रसितो बभूव। अतस्तमनायासेन विनिहत्य सेनापतिः पुष्पमित्रः स्वयं सिंहासनमध्यासीनो यथावद्राज्यं चकार। ज्येष्ठं चात्मनः पुत्रमग्निमित्रं विदिशानगरस्य राजानमकार्षीत्। मौर्यसचिवस्तु निहते स्वामिनि बृहद्रथे भग्नमनोरथः परं विषादमुपगतः स्वश्यालं विदर्भमहीपालं यज्ञसेननामानमुपस्थातुकामो निभृतमेकाकी निर्गच्छन् मध्येमार्गमग्निमित्रेण बन्दिग्राहं गृहीतः कारायां प्रक्षिप्तः ॥

अग्निमित्रस्य द्वे जाये आस्ताम्—एका धारिणी पट्टमहिषी, अपरा चेरावती शृङ्गारसखी। अथ विदर्भाधिपतिर्माधवसेनोऽप्यात्मनः स्वसारं मालविकां तस्मै दित्सन् दूतान् प्रेषयामास।

अग्निमित्रोऽपि मित्रभावेन दूतान् सम्मान्य विवाहे स्वीयामनुमतिं तस्मै सन्दिदेश। स च सहर्षं तेन सह प्रतिश्रुतसम्बन्धः सोदर्यामादाय सकलत्रपुत्रस्तदन्तिकमुपगच्छन् विदर्भाणां राज्ञा तत्पितृव्यपुत्रेण यज्ञसेनेनावस्कन्द्य गृहीतो बन्धने स्थापितः॥

तां वार्तां श्रुत्वा क्रोधाकुलोऽग्निमित्रः सद्यो माधवसेनस्य सकलत्रसोदर्यस्य मोचनं प्रार्थयमानो यज्ञसेनाय लेखं विससर्ज। सोऽप्यात्मगौरवानुरूपं प्रतिलेखं प्रेषयामास। राजा लेखहवाहकेनो-नीतं लेखमादायोद्घाट्य पश्यन् इदमिदानीमनेन प्रतिलिखितम्—स्वस्ति, पूज्येनाहं माधवसेनस्य सकलत्रसोदर्यस्य मोचनायादिष्टः। किन्तु किं न तत्रभवतो विदितं यत् तुल्याभिजनेषु भूमिधरेषु राज्ञां प्रवृत्तिरीदृशीति। अतस्तत्रभवानत्र विषये मध्यस्थो भवितुमर्हति। माधवसेनस्य सोदर्या पुनर्ग्रहणविप्लवे विनष्टा। तदन्वेषणाय यतिष्ये। अथ माधवसेनोऽवश्यं मोचयितव्यः श्रूयतामभिसन्धिः—

मौर्यसचिवं विमुञ्चसि
यदि संयतं मम श्यालम्।
मोक्ता माधवसेनं
ततोऽहमपि बन्धनात्सद्यः॥

लेखमिममनुवाच्य राजा तदुट्टङ्कितेन कार्यविनिमयव्याहारेण व्याकुलितहृदयश्चलितेन्धनो वह्निरिव भृशं जज्वाल। प्रकृत्यमित्रस्य प्रतिकूलचारिणो यातव्यपक्षे स्थितस्य तस्य पूर्वसङ्कल्पितमुन्मूलनं

प्राप्तकालमाकलयामास। ततो झडित्येव कृत्यविदा प्रधानामात्येन सार्धमालोचयन् सद्य एव यज्ञसेनस्यावस्कन्दनाय नर्मदाकूलेऽन्तपालदुर्गे स्थापितं वीरसेनप्रमुखं दण्डचक्रमुद्योजयामास।

दुर्दैवयोगेन दायादवशं गते माधवसेने प्रत्युत्पन्नमतिस्तदमात्यः सुमतिः कौशिक्या सह मालविकां गूढमपनीय निश्चक्राम। मालविकामग्निमित्रायोपहृत्य पश्चादनात्मज्ञस्य यज्ञसेनस्य प्रतीकारमाचरिष्यामीत्याकलयन् स विदिशापुरगामिनं पथिकसार्थमनुप्रविश्य प्रचलितः। किञ्चिद्दूरं गत्वा स पथिकसार्थो भूयसाध्वश्रमेणार्तः क्वचिदटव्यन्ते विश्रमायोपविष्टः समन्तादभिव्याप्ते कराले सन्ध्यातमसि सहसाविर्भूतैर्विविधायुधपाणिभिराटविकैर्दस्युभिः प्रत्यरोधि। मुहूर्तं बद्धयुद्धाः पथिकसार्थवाहयोद्धारस्तस्करैः पराङ्मुखीकृताः। दुर्जातेऽस्मिन् पराभिभवकातरां मालविकां परित्रातुकामः समरप्रवृत्तः सुमतिरात्मनः प्राणैर्भर्तुरानृण्यं गतः। भ्रातरं तथाविधमवलोक्य कौशिकी मोहमुपगता। सार्थवाहानामर्थजातमादाय गच्छन्तस्तस्कराः निरतिशयलावण्यामशरण्यामरण्यमध्ये दीनदीनं परिक्रन्दन्तीं मालविकामवलोक्य सञ्जातानुकम्पास्तामादाय प्रस्थिताः। प्रयान्तश्च ते पथि समापत्तिदृष्टाय वीरसेनाय तां प्रायच्छन्। सोऽपि तां शिल्पाधिकारे कुशलामवलोक्य स्वभगिन्यै धारिण्यै सादरमुपायनत्वेन प्रेषयामास॥

भ्रातुर्विपत्त्या काननान्ते मोहमुपगता कौशिकी शनैर्लब्धसंज्ञा नयनपथातिक्रान्तेषु दस्युषु कथञ्चिदुत्थाय परितश्चक्षुः प्रक्षिपन्ती रक्तसिक्तं क्षितौ पतितं भ्रातुः कलेवरमन्तिके विलोक्य सोरस्ताड-

मुच्चैररोदीत्। किन्त्वरण्यरोदनेन किं वा फलं भविष्यतीति मत्वा सा भ्रातृस्नेहस्यानुरूपं प्रत्युपकारं तमेव मन्यमाना स्वयं काष्ठानि सञ्चित्य तस्य कलेवरमग्निसादकरोत्। चकार च सलिलक्रिया-मश्रुधारया। इतस्ततो विचिन्वत्यपि सा मालविकामनुपलभ्य शोकाकुला किंकर्तव्यतामूढा क्षणं तस्थौ। ततस्तत्कालोपनतेन धैर्येण नीयमाना सा विदिशापुरगामिनं पन्थानमाश्रित्य प्रययौ। आसाद्य च विदिशाराजधानीं प्राप्तनिर्वेदा सा संसारादुद्विजमाना सन्यासमास्थाय दैवयोगादग्निमित्रभवने प्रवेशमलभत। तत्र सा मालविकावलोकनेन शान्तशोकावेगा पुनर्जीवलोकं प्रविष्टेवाभूत्। आत्मीयेन विज्ञानातिशयेन पण्डितकौशिकीति व्यपदिश्यमाना सा सर्वेषां बहुमाननायाः पात्रमभूत्। न मालविका नापि कौशिकी स्वीयं यथास्थितमुदन्तं प्रकटयामास॥

मालविकापि कौशिक्याः समागमेन मुदितान्तरङ्गा गुणानु-रागिण्या धारिण्या नियुक्ता नाट्याचार्यादार्यगणदासादखिलां नाट्य-कलामशिक्षत। विशेषतश्च चलितं नाम नाट्यमन्तरेण निरतिशयं नैपुण्यमविन्दत॥ यद्यत् प्रयोगविषये गुरुणोपादिश्यत तत्सर्वं विशेषकरणेन गुरुमेव सा प्रत्युपदिशन्तीव व्यराजत। गुरुरपि तामाकृतिविशेषप्रत्ययादनूनवस्तुकां सम्भावयन् सादरमशिक्षयत्। समुद्रशुक्तौ पतिताः पयोदजलबिन्दव इव तस्यामाहिता उपदेशाः परां शोभामवापुः। तदवलोक्य गणदासः नूनमनयाहं यशस्वी भविष्यामीत्याकलयन् भृशं तुतोष॥

जन्मनैव निर्जिताशेषरूपसम्पदं कलाग्रहणेन च परिवर्धित-कान्ति मालविकां राज्ञो दृष्टिपथाद्रक्षणे सावधानाऽभूद्धारिणी। एकस्मिन्नहनि देवी धारिणी चित्रशालां गता तत्र प्रत्यग्रवर्णरागां चित्रलेखामवलोकयन्ती तस्थौ। तदा राजा तत्रोपस्थितः। उपचारानन्तरमेकासनोपविष्टोऽसौ तया सह चित्ररेखामवलोकयन् परिजनानां मध्ये धारिण्याः प्रत्यासन्नत्वेन लिखितां मालविकां निर्वर्ण्य तल्लावण्याकृष्टहृदयः — 'अपूर्वेयं दारिका, किंनामधेया सा' इति धारिणीमपृच्छत्। अनिष्टमाशङ्कमाना राज्ञी न किञ्चित् प्रतिवचनं ददौ। अवधीरितवचनो राजा पुनरप्यनुबध्नन् 'आर्य, इयं मालविका' इति धारिण्याः कनीयस्या भगिन्या बालभावसुलभ-चापलया वसुलक्ष्म्याभिहितः। ततः प्रभृति साशङ्का धारिणी मालविकां सविशेषं राज्ञो नयनपथादरक्षत्॥

चित्रदर्शनाद्राज्ञो मालविकायाः साक्षाद्दर्शने महत् कौतूहल-माविरभूत्। तस्य गौतमो नाम शृङ्गारतन्त्रकुशलो नर्मसचिवः। राजा रहस्यात्मनो मनोरथं तस्मै निवेद्य—'सखे, तमसा प्रति-बद्धोऽयमर्थः प्रदीपकल्पेन त्वया मे दर्शनविषयतां प्रापणीयः' इति तं प्रार्थयत। गौतमोऽपि राज्ञः प्रियं चिकीर्षन् उपेयोपाय-दर्शने स्वीयं प्रज्ञाचक्षुः सुदूरं व्यापारयामास। ततोऽसौ कर्तव्यं निश्चित्य राज्ञः कर्णे कथयित्वा कार्यसिद्ध्यर्थं निर्गतः॥

तस्मिन् राजकुले द्वावभिनयाचार्यौ हरदत्तगणदासाभिधानौ। तयोराद्यो राज्ञा द्वितीयश्च राज्ञ्या परिगृहीतः। गणदासस्य

प्रधानशिष्या मालविका, हरदत्तस्य चेरावती। गौतमश्च नारदायमानः पृथक्तया तयोराचार्ययोः समीपं गत्वा किमपि कर्णजपन् तयोर्मिथः कलहमुत्पादयामास। तौ च कोपवशं गतौ शिष्योपदेशं परित्यज्य—'अलमलं बहु विकथ्य, राज्ञः समक्षमेवावयोरधरोत्तरव्यक्तिर्भविष्यति' इत्याक्रोशन्तौ राजगृहद्वारमवापतुः। कञ्चुकी राजानमुपसृत्य जयशब्दमुदीर्य देव, परस्परं जयोद्यतावुभावभिनयाचार्यौ देवं द्रष्टुमिच्छतः इति विज्ञापयामास। तदाकर्ण्य राजा गौतमोप्तं नीतिबीजं लब्धाङ्कुरं मन्यमानो हृष्यन् तयोः प्रवेशनाय कञ्चुकिनमाज्ञापयामास। प्रविष्टौ च तौ 'किमिदं शिष्योपदेशकाले युगपदुभयोरुपस्थानम्' इति राजा पप्रच्छ। गणदासः ससंरम्भमवोचत् —'देव, श्रूयताम्, मया तीर्थादभिनयविद्या शिक्षिता, दत्तप्रयोगश्चास्मि। देवेन देव्या च परिगृहीतः। सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षं नायं मे पादरजसाऽपि तुल्य इत्यधिक्षिप्तः' इत्येवं वदत्येव तस्मिन् तस्य वचनमाक्षिप्य हरदत्तः प्रोवाच—देव अयमेव मयि प्रथमं परिवादकरः। अत्रभवतो मम च किल समुद्रपल्वलयोरिव महदन्तरम्। तत्रभवानिमं मां च शास्त्रे प्रयोगे च विमृशतु। देव एव नौ विशेषज्ञः प्राश्निकश्च' इति॥

तच्छ्रुत्वा राजा–'तिष्ठतु तावत्। देवी पक्षपातमत्र ग्रहीष्यति। अतः पण्डितकौशिक्या सहितायास्तस्याः समक्षमेव न्याय्यो व्यवहारः' इत्युक्त्वा ते उभे अप्यानाययामास। आगतयोश्च तयोः स्वागतं व्याहृत्य राजा पण्डितकौशिकीमाह—'भगवति, अनयोरा-

चार्ययोः परस्परं विज्ञानसङ्घर्षो जातः। तदत्र भगवत्या प्राश्निकपदमध्यासितव्यम्' इति। पण्डितकौशिकी सास्मितमाह—'अलमुपालम्भेन। पत्तने विद्यमाने किं ग्रामे रत्नपरीक्षा' इति। राजापि—'मा मैवम्। पक्षपातिनावनयोरहं देवी च। तन्मध्यस्था भगवत्येवानयोर्गुणदोषौ परिच्छेत्तुमर्हति' इति वदंस्तया प्राश्निकपदं ग्राहयामास। ततः 'प्रस्तूयतां विवादः' इत्यभिहितवति राज्ञि पण्डितकौशिकी प्राह—प्रयोगप्रधानं हि नाट्यशास्त्रम्। किमत्र वाग्व्यवहारेण। अतः शिष्योपदेशदर्शनेनैवानयोरधरोत्तरव्यक्तिर्भविष्यति। एवमभिधाय 'किं वा देवी मन्यते' इति पृष्टया धारिण्या मालविका राज्ञो दृष्टिपथे पतिष्यतीति भयेन जगादे—यदि मां पृच्छसि, एतयोर्विवाद एव न मे रोचते। अचिरोपनीता गणदासस्य शिष्या। अप्रतिष्ठितस्योपदेशस्यान्याय्यं प्रदर्शनम्। यदा पुनर्मन्दमेधा शिष्योपदेशं मलिनयति तदाचार्यस्य दोषोनु। तन्नायमारम्भः समुचितः' इति। तद्वचनमाकर्ण्य विदूषक आह—देवि, पश्याव उरभ्रसम्पातम्। किं मुधा वेतनदानेन। अन्योन्यकलहितयोर्मत्तहस्तिनोरन्यतरस्मिन्ननिर्जिते कुत उपशमः' इति॥

'त्वं तावत् कलहप्रियोऽसि' इति धारिण्याभिहितो गौतमः सोपहासं गणदासमवादीत्—'भो गणदास, सङ्गीतापदेशेन सरस्वत्युपायनमोदकान् खादतस्ते किमनेन सुलभनिग्रहेण विवादेन। तस्माद्विरमास्मान्निरर्थकादारम्भात्' इति। तदाकर्ण्य समुद्दीपित-

संरम्भो गणदासः — सत्यम्, अयमेवार्थो देवीवचनस्य । देवि, श्रूयतां तावत्—

लब्धास्पदोऽस्मीति विवादभीरो-
स्तितिक्षमाणस्य परेण निन्दाम् ।
यस्यागमः केवलजीविकायै
तं ज्ञानपण्यं वणिजं वदन्ति ॥

यस्मान्मम शिष्याऽचिरोपनीता तत एवायं मे प्रयोगदर्शने निर्बन्धः। अपरं च गणदासोऽयं कोपव्याजेन देव्या परित्रात इति कौलीनं मे भविष्यति । तद्देवि श्रूयताम्—

विवादे दर्शयिष्यन्तं क्रियासंक्रान्तिमात्मनः ।
यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया ॥

इत्र साधयामि इति वदन्नासनादुदतिष्ठत् । गणदासस्य वचनं श्रुत्वा देवी द्वैधीभावभयेन प्राह—'तेन हि द्वावप्युपदेशं भगवत्यै दर्शयतम्' इति । एवमुक्तवतीं धारिणीं पण्डितकौशिकी प्राह—'देवि, नैतन्न्याय्यम्। सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय भवति' इति । ततो निर्वचनीकृता धारिणी राजानमवलोक्याह—'यदि राजकार्येष्वीदृशं नैपुण्यमदर्शयिष्यदार्यपुत्रस्तर्हि शोभनमभविष्यत्' इति। तथा वदन्तीं तामनुनयन् राजा—'देवि, अलमन्यथा गृहीत्वा, नेदं मया प्रयुक्तम् । लोके हि समानविद्याः प्रायेण परस्परयशःपुरोभागिनो भवन्ति। किं मयात्र कृतम्' इति सप्रश्रयं ब्रुवाणस्तां समादधे ॥

अथ तत्रभवतोराचार्ययोः कतरस्य प्रथममुपदेशः प्रेक्षणीय इति शङ्कायामङ्कुरितायां समानेऽपि ज्ञानवृद्धभावे वयोऽधिकत्वाद्गणदासः पुरस्कारमर्हतीति युक्तरूपं वचनमवोचत् पण्डितकौशिकी। तस्या एव वचनमनुसृत्य चलिताभिनयः प्रदर्शनीयत्वेन निश्चितः। तदनुरोधेन द्वावप्याचार्यौ स्वस्वपात्रसज्जीकरणाय प्रयातौ॥

मुहूर्तानन्तरं प्रेक्षकानाह्वयन्निव सङ्गीतशालायां मृदुमधुरो मृदङ्गध्वनिःसमारब्धः। राजा कौशिकीं पुरस्कृत्य धारिण्या सह सकुतूहलः समये सभिकतामवाप। गणदासो मालविकामङ्गसौष्ठवाय विरलनेपथ्यां रङ्गभूमिं प्रावेशयत्। राजा नयनमधूपस्थितं मेने किन्तु सन्निहितमक्षिकमिति कृत्वा चकित एवास्त। मालविका गणदासेनादिष्टा—

दुर्लभः प्रियस्तस्मिन्भव हृदयनिराशम्।
अहो अपाङ्गको मे परिस्फुरति किमपि वामकः।
एष स चिरदृष्टः कथमुपनेतव्यः।
नाथ मां पराधीनां त्वयि गणय सतृष्णाम्॥

इत्येतां शर्मिष्ठायाः कृतिमात्मनोऽनुरागं राज्ञे व्यञ्जयन्तीव स्वाङ्गनिर्देशपूर्वमन्तर्निहितवचनैरङ्गैरभिनीतवती। राजाप्युल्लोलकुतूहलः समजनि॥

गीतान्ते गन्तुमुद्यतां मालविकां निवारयन् गौतमो गणदास-माह—'ओः तिष्ठत्वेषा, विस्मृतो वः कश्चित् क्रमभेदः' इति। तद्वचनमाकर्ण्य गणदासः भद्रे, तिष्ठ, उपदेशविशुद्धा यास्यसीति वदंस्तां स्थापयामास। सापि पार्श्वविन्यस्तवामहस्ता कुट्टिमे पातिताक्षी पादाङ्गुष्ठेन कुसुममालुनती तस्थौ। राज्ञः पुरस्तात् तस्याः स्थितिमसहमाना धारिणी किं गौतमस्य वचनमप्यार्यः कर्णे करोतीति गणदासमभाणीत्। तथा वदन्तीं तां गणदासः देवि मैवम्, देवप्रत्ययात् सम्भाव्यते सूक्ष्मदर्शिता गौतमस्येति समाधाय तच्छृणुमो विवक्षितमार्यस्येति गौतममभ्यधात्। स तु प्रथमं तावदेषा प्राश्निकी स्वीयमभिप्रायं ब्रवीतु, पश्चादहं मया दृष्टं क्रमभेदं कथयिष्यामीत्यवोचत्। यथा दृष्टं सर्वमनवद्यमित्यात्मनोऽभिप्रायमाविश्चकार कौशिकी। तदभिप्रायमाकर्ण्य परितुष्टोऽपि गणदासः कीदृशमेष दोषं वक्ष्यतीति पर्याकुलोऽभवत्। अथ तेन पृष्टो गौतमः—'भोः प्रथमं ब्राह्मणस्य पूजा कर्तव्यासीत्। सा वो विस्मृता' इति सोपहासं निजगाद। सर्वे सहस्तताडं जहसुः। मालविकापि नेत्रोपान्तेन गौतमं दृष्ट्वा स्मितं चकार। प्रशान्ते हासशब्दे गणदासः—'महाब्राह्मण, न खलु नेपथ्यसङ्गीतकमिदम्। अन्यथा कथं त्वामर्चनीयं नार्चयिष्यामः' इति विदूषकमभिधाय परीक्षकाराधनेनात्मानं नर्तयितारममन्यत। गौतमस्तद्वचनमाकर्ण्य-'मया नाम मुग्धचातकेनेव शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिष्टम्। आस्तां तावत्। पण्डितपरितोषप्रत्यया ननु मूढा जातिः।

यतोऽत्रभवत्या प्राश्निकया सर्वं शोभनं भणितं तस्मादिदमस्यै पारितोषिकं प्रयच्छामि, इति वदन् राज्ञो हस्तात् कटकमाकृष्य मालविकायै दातुमिच्छति। तं निवारयन्ती धारिणी किमिति गुणान्तरमजानन् राजकीयमाभरणं ददासीत्यब्रवीत्। देवि, परकीयमितिकृत्वा ददामीतिप्रवदन्नहसीद्गौतमः। ततो धारिण्या वचनाद्रङ्गभूमेर्निष्क्रान्तायां मालविकायां राजा स्वनयनयोर्भाग्यमस्तमितं मेने। तयापहृतमिव तस्य हृदयं शून्यतामवाप॥

अथ हरदत्तः सप्रश्रयमुपसृत्य स्वप्रयोगावलोकनाय राजानं प्रार्थयत। राजा त्ववसितत्वाद्दर्शनार्थस्य तद्वचनमनभिनन्दन् सव्याजं प्रत्यवोचत्—'देवी तावदतिमात्रं परिश्रान्ता लक्ष्यते। वयमपि पर्युत्सुकाः स्मः। तद्भवतः प्रयोगं श्वो द्रक्ष्यामः' इति। एवं वदत्येव तस्मिन् सवितारं मध्यमह्नः समारूढमावेदयन् वैतालिकः कलमधुरमगायत्। तेन सर्वे समुत्थाय यथायथं जग्मुः। राजाऽपि गच्छन्—'सखे, चिन्तयितव्योऽसि' इति गौतमं भूयः शरणमन्वियेष। गौतमोऽब्रवीत्—'सखे त्वं तावत् दरिद्र इवातुरो वैद्येनोपनीयमानमौषधमिच्छसि। न जाने किमत्र कर्तव्यं परायत्ते वस्तुनि। मेघावलीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका। त्वमपि सूनापरिचरो विहग इवामिषलोलुपो भीरुकश्च। दूरदर्शिन्यपि कुण्ठीभूता मे मतिरस्मिन् विषये। अथापि यथामति यतिष्ये, तावत्' इति राजानं सान्त्वयामास॥

मालविकाया दर्शनादतिभूमिं जगाम राज्ञस्तस्यामनुरागः । तल्लाभैकप्रतीकारां रुजमापद्यत सः । मालविकापि राज्ञो दर्शनात् प्रभृत्यनुभूतमुक्ता मालतीमालेव म्लायमाना बभूव । राजा मालविकायां साभिलाषो वर्तत इत्येतत् कौलीनं परिजनेषु प्रसृतं कर्णाकर्णिकया धारिण्याः कर्णपथमवाप । तेन सा मालविकायाः प्रच्छादने पूर्वाभ्यधिकां श्रद्धां बबन्ध । नागरक्षितो निधिरिव सा कन्यका परेषां दुरासदा संवृत्ता । गौतमस्तां तदवस्थां विज्ञाय सूक्ष्मेक्षणिकया कार्यसिद्धिपथमालोचयन् मालविकायाः सखीं बकुलावलिकामुपेत्य प्रलोभनवचनैस्तां स्वायत्तीचकार । साऽपि राजप्रसादलोलुपा दुष्करमपि कार्यं साधयिष्यामीति प्रतिजज्ञे । गौतमोऽपि प्रमुदितो राजानमभ्येत्य स्वकृतं कार्योपक्षेपं तस्मै न्यवेदयत् ॥

अनन्तरमिरावत्या निपुणिकामुखेन प्रार्थितो राजा तया सह दोलाधिरोहणमनुभवितुं गौतमेन सह प्रमदवनं जगाम । तत्र च पवनचलिताभिः पल्लवाङ्गुलिभिस्त्वर्यमाण इव प्रमदवनं प्राविक्षत् । अवसरेऽस्मिन् दोलापरिभ्रष्टया सरुजचरणया धारिण्या कुसुमोद्भेदमन्थरं तपनीयाशोकं दोहदेन सम्भावयेत्यादिष्टा मालविका प्रथममेव प्रमदवनमागत्याशोकमूलमध्यास्त । तामवलोक्य राजा गौतमेन सह नातिदूरेऽपवार्य तस्थौ ॥ इरावत्यागमनस्य समयोऽयमिति राजानं स्मारयामास गौतमः । सखे, न भेतव्यम् । न हि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गज इति राजा प्रत्यवोचत् ।

क्षामक्षामकलेवरां किमपि चेतसा कलयन्तीं तामवलोक्य मदनव्याधिना परामृष्टां तर्कयन्नपि राजा तत्त्वावबोधैकरसो न तर्क इति मत्वा न तामुपजगाम। अत्रान्तरे बकुलावलिका भूषणहस्ता समेत्य मालविकायाश्चरणं नूपुरेणालक्तकेन च भूषयामास। तयोर्मिथः-संलापेन प्रकटीकृतमात्मनि मालविकाया अनुरागं प्ररूढं विज्ञाय राजा भृशं तुतोष॥

अत्रान्तरे दोलाधिरोहणार्थमिरावती मदाघूर्णितनयना निपुणिकया सह प्रमदवनमागत्य दोलागृहे राजानमपश्यन्ती परिहासनिमित्तं कुत्रापि निलीनस्तिष्ठेदिति मन्वाना तपनीयाशोकस्य मूलमाजगाम। तत्र मालविकामवलोक्य चूताङ्कुरमन्विष्यन्ती पिपीलिकादष्टेवाकुला बभूव। केनाप्यत्र विशेषेण भवितव्यमित्याकलय्य दूरत एवापवार्य तस्थौ॥

अलङ्कृतचरणा मालविका वामपादेन तपनीयाशोकस्य दोहदं निर्वर्तयामास। तदवलोक्य गौतमः—एष्वेनां परिहासयिष्यामीति राज्ञा सह तदन्तिकं गत्वा—'भद्रे, युक्तं नामात्रभवतः प्रियोऽयमशोको वामपादेन ताडयितुम्' इति मालविकामुक्त्वा 'बकुलावलिके, गृहीतार्थया त्वयाऽत्रभवत्येतादृशमविनयं कुर्वती कस्मान्न-निवारिता' इति कुपितमिवात्मानं दर्शयन् बकुलावलिकामपृच्छत्। बकुलावलिकापि भयमिव नाटयन्ती—'प्रसीदतु भर्ता, एषा देव्या नियोगमनुतिष्ठति' इति वदन्ती मालविकां राज्ञः पादयोः पातयामास। कृतपादवन्दनां तामुत्थाप्य राजा हस्ते गृहीत्वा—'सुन्दरि, ममाप्यनन्यरुचेर्दोहदं निर्वर्तयस्व' इत्येतदन्यच्च वक्तुमारभत॥

सर्वमिमं वृत्तान्तमवलोक्येरावती कोपस्य परां काष्ठामारूढा सहसोपसृत्य —'अहह बकुलावलिके, साधूपक्रान्तं त्वया। मालविके त्वमिदानीं त्वदर्थं सशोकस्यार्यपुत्रस्य दोहदं निर्वर्तय। अशोकः कृतदोहदः केवलं पुष्प्यति, अयं पुनः पुष्प्यति फलति च' इत्येवमाभाषमाणां तां राजा तस्या हस्तं गृहीत्वा—'सुन्दरि, प्रसीद, त्वं चिरयसीति मया कथञ्चिदात्मा विनोदितः' इत्यादिभिर्वचनैस्तां सान्त्वयितुं प्रवृत्तः॥ आत्मनो हस्तं बलादाकृष्य सा 'अहो अविश्वसनीयाः पुरुषाः। मया तावदात्मनो वञ्चनावचनं प्रमाणीकृत्य व्याधगीतरक्तया हरिण्येवाशङ्कितया न विज्ञातमेतत् कपटाचरणम्। न च मया विज्ञातमीदृशं विनोदवस्तु भवतोपलब्धमिति। अन्यथा मन्दभागिनी नात्रागमिष्यम्। तन्नाहं तव विनोदस्योपरोधं कर्तुमिच्छामि' इति परुषमभिदधत्येव प्रस्थिता। राजा तां प्रसादयन् 'अविश्वसनीय, शठ, इत्यभिदधानायास्तस्याः पादयोः पपात। सा तु तस्य प्रसादनमनादृत्य सहसा निर्जगाम॥

मालविकाहृतहृदयस्य राज्ञः प्रणिपातलङ्घनमपि प्रमोदायाकल्पत। सा च भूयः समागच्छेदिति भिया राजा विदूषकेण सह प्रमदवनात् सत्वरं निर्जगाम॥

व्याकुलीभूतेरावती सुखपृच्छिका सरुजचरणां धारिणीमुपसृत्य निखिलमशोकमूलवृत्तान्तं तस्यै न्यवेदयत्। तदाकर्ण्य धारिणी मालविकां बकुलावलिकया सार्धमन्धतमसावृते सारभाण्डभूगृहे स्थापयमास। आज्ञापयामास च तदधिकृतां

माधविकां—'ममाङ्गुलीयकमुद्रामदृष्ट्वा न मोचनीया त्वया मालविका बकुलावलिका च' इति। तथाविधत्वाद्भवितव्यताया राजवंशप्रसूता मालविका सख्या साकमदृष्टसूर्यपादं पातालवासमन्वभूत् ॥

वृत्तान्तमिमं श्रुत्वा कुण्ठितारम्भोऽप्यकुण्ठितोत्साहो गौतमः- वयस्य मा भैषीः। एवं गतेऽपि वस्तुनि ममानेन मतिविभवेन तव समीहितं सम्पादयिष्यामीत्याभाष्य स्वालोचितमुपायं तस्मै निवेद्य स्वयं कार्यसिध्यै प्रतस्थे। राजापि गौतम-वचनानुरोधेन सरुजचरणां धारिणीं द्रष्टुं तद्भवनं जगाम। गत्वा च प्रवातशयने निषण्णां पण्डितकौशिक्या कथाभिर्विनोद्यमानां तामुपजगाम। तमवलोक्य ससम्भ्रममुत्थातुमुद्यतां देवीमल-मुपचारेणेत्युक्त्वा तामुपवेश्य स्वयमपि तस्मिन्नेव शयनीये समुपविष्टस्तया सह तास्ताः कथाः कुर्वन्नास्त ॥

अत्रान्तरे यज्ञोपवीतबद्धाङ्गुष्ठो गौतमः सम्भ्रान्तः—'देव, परित्रायतां परित्रायताम्। सर्पेण दष्टोऽस्मि। देवीं द्रक्ष्यामी-त्युपचारपुष्पग्रहणार्थं प्रमदवनं गतः। तस्मिन्नशोकस्तवककारणात् प्रसारिते दक्षिणहस्ते कोटरनिर्गतेन कालरूपेण सर्पेण दष्टोऽस्मि' इत्याक्रोशन् तदन्तिकमभिद्रुतः। सर्वे सम्भ्रान्ता हाहाशब्दमकुर्वन्। धारिणी—हा धिक् अहमेवास्य ब्राह्मणस्य जीवितसंशयनिमित्तं जातेति परं विषादमगमत्। दंशस्य च्छेदो दाहो वा पूर्वकर्मेति श्रूयते, तदस्य क्रियतामङ्गुलिच्छेद इत्यवोचत् कौशिकी। 'अहो मृत्युना गृहीतोऽस्मि। सिमसिमायन्ति मेऽङ्गानि' इति वदन्

विषवेगं नाटयामास। ततोऽसौ राजवचनात् ध्रुवसिद्धिनाम्नो विषवैद्यस्यान्तिकं परिचरैर्नीयमानः—'अहो गृहीतोऽस्मि मृत्युना। वयस्य, बाल्यात् प्रभृति ते प्रियवयस्योऽस्मि। तद्विचार्य मदेक-पुत्राया मे जनन्याः योगक्षेमं वह' इति राजानमभिधाय—'देवि, जीवेयं वा न वा। यन्मया तत्र भवन्तं सेवमानेनापराद्धं तन्मृष्यताम्' इति सप्रश्रयं धारिणीमाभाष्य क्रोशन्नेव निर्जगाम।

मुहूर्तानन्तरं जयसेनाभिधाना प्रतीहारी समेत्य जयतु भर्ता, ध्रुवसिद्धिर्विज्ञापयति उदकुम्भविधाने सर्पमुद्राङ्कितं किमपि कल्पयितव्यम्, तदन्विष्यताम्' इति व्यजिज्ञपत्। धारिणी स्वहस्तात् सर्पमुद्राङ्कितमङ्गुलीयकमवतार्य ददौ। तदङ्गुलीयक-मादाय सा कर्मसिद्धावाशु प्रतिपत्तिमानयेत्याज्ञप्ता यथाज्ञापयति देव इत्युक्त्वा त्वरितगतिर्निर्जगाम। गौतमगतचित्ताः सर्वे व्याकुलीभूय कथान्तरविमुखाः स्थिताः। मुहूर्तेन प्रतीहारी समेत्य गौतमः प्रकृतिस्थः संवृत्त इति प्रवृत्तिमुपजहार। सर्वे प्रहर्षं गताः। दिष्ट्या वचनीयान्मुक्तास्मीत्यमन्यत धारिणी॥

प्रतीहारी भूयः प्रविश्य राजानं व्यजिज्ञपत्—'देव, एव पुनरमात्यो विज्ञापयति राजकार्यं बहु मन्त्रयितव्यम्, तद्दर्शनेनानु-ग्रहमिच्छामि' इति। तच्छ्रुत्वा कार्यज्ञा राज्ञी राजानं विससर्ज। राजा ततो निर्गत्य जयसेनया गूढेन यथा नीयमानः प्रमदवनं गतः॥

विदूषकस्तु न वस्तुतः सर्पेण दष्ट आसीत्। स धारिण्याः सकाशादङ्गुलीयमुद्राधिगमाय कपटप्रबन्धमिममारचयामास।

जयसेनोपनीतं देव्या अङ्गुलीयकमादाय स सारभाण्डभूगृहाधिकृतां माधविकामुपजगाम। प्रदर्श्य च तस्यै तदङ्गुलीयकम्—माधविके, अद्य धारिण्या दोलाभ्रंशे निमित्तं चिन्तयद्भिर्दैवज्ञैर्विज्ञापितो राजा सोपसर्गं वो नक्षत्रम्, सद्यः सर्वबन्धमोक्षः क्रियतामिति। तच्छ्रुत्वा देवी इरावत्याश्चित्तं रक्षन्ती राजा किल मोचयतीति मां सन्दिष्टवती। तत्सत्वरं मोचय बन्धनात् कन्यकाद्वयमित्यवोचत्। धारिण्या अङ्गुलीयकमुद्रामवलोक्य गौतमस्य वचसि विश्वासं गता सद्यस्ते कन्यके बन्धनान्मोचयामास। गौतमोऽपि प्रमोदभरितस्ते सत्वरं समुद्रगृहं प्रापय्य स्वयं प्रमदवनं गत्वा राज्ञे स्वबुद्धिप्रभाव भावितां कार्यसिद्धिं शशंस॥

राजा स्वधिषणावधीरितधिषणस्य सुहृदः प्रज्ञाप्रकर्षं प्रशंसन्नुन्मनायमानस्तेन सह द्रुतपदः समुद्रगृहं जगाम। गच्छतोस्तयोस्तत्र सम्मुखोद्याने चन्द्रिका नामेरावत्याः सखी पुष्पावचयं कुर्वत्यासीत्। गौतमस्तां दूरादवलोक्य चोरैः परिहरणीया चन्द्रिकेति वदन् राजानमन्येन पथा समुद्रगृहं प्रवेशयामास। स्वयं च समुद्रगृहद्वारे स्फटिकस्थलमाश्रितः परिश्रमवशाद्विपणिवृषभ इवोपविष्ट एव निद्रयापहृतो बभूव॥

मुहूर्तानन्तरं गौतमं निद्रायमाणं निपुणिकामुखादधिगत्येरावती विषशेषकृतं दोषमाशङ्कमाना सद्यस्तत्राजगाम। दृष्ट्वा च तं निद्रामुद्रितलोचनं मन्दं मन्दमुपससर्प। गौतमस्तदानीमुत्स्वप्नायमानः—'मालविके, इरावतीमतिक्रामन्ती भव' इत्युज्जगार।

तच्छ्रुत्वा कशाभिहतेव क्रोधवशं गता सा कृतघ्नोऽयमर्हत्युपद्रवस्येति वदन्ती स्तम्भान्तरिता भूत्वा भुजङ्गकुटिलं दण्डकाष्ठं तस्योपरि पातयामास। सोऽपि ससम्भ्रम प्रबुध्य 'अविहा अविहा दर्वीकरो ममोपरि पतितः' इत्याक्रोशत्। सखे न भेतव्यं न भेतव्यमिति ब्रुवन् राजा सहसा समुद्रगृहान्निर्जगाम। मालविकापि तमन्वगात्। तदा गौतमो निरूप्य पश्यन् 'कथं दण्डकाष्ठमेतत्। मया पुनश्चिन्तितं यन्मया केतकीकण्टकैः सर्पस्येव दंशः कृतस्तन्मे फलितम्,' इति सोपहासमवोचत्॥

इरावती राजानं मालविकां च तत्रावलोक्य रोषेणाकृष्यमाणेव सोत्प्रासहासा सहसा राज्ञः पुरस्तादाविर्बभूव। सर्पभयान्मुक्ताः सर्वे तद्भयेन सम्भ्रान्ता बभूवुः। मालविकामाकुलेन चक्षुषा लक्ष्यीकुर्वतीमिरावतीमवलोक्य गौतमः—'हन्त बन्धनभ्रष्टा गृहकपोतिका बिडालिकालोके पतिता' इत्याकलयन् कम्पमानकलेवरस्तस्थौ। नूनमयमस्य ब्रह्मबन्धोः कामतन्त्रसचिवस्य मन्त्रप्रयोग इति गौतममधिक्षिप्य सा—महाराज, अपि निर्विघ्नमनोरथोऽसि? मालविके, अप्येष विषमविटपी त्वया दोहदपूरणेन यथावत् सम्भावितः? वकुलावलिके, अपि त्वया सत्यापिता दूत्याधिकारविषया प्रतिज्ञा? इत्येकैकशस्तान् भर्त्सयामास। तैरुदीर्यमाणमपि प्रत्युत्तरं न सा कर्णे चकार। धारिणीमपि कपटकारिणीमाकलयन्ती सा तस्यै परुषाक्षराणि वचनानि सन्दिदेश। कथमिदानीमस्मात् सङ्कटादात्मानं मोचयामीति राजा चिन्तापरो जातः॥

दिष्ट्या व्यतिकरेऽस्मिन् कञ्चुकी महता सम्भ्रमेणोपसृत्य—'जयतु महाराजः। कुमारी वसुलक्ष्मीः कन्दुकेन क्रीडन्ती मन्दुरापरिभ्रष्टेन पिङ्गलवानरेण बलवत् त्रासिता देव्या अङ्के निषण्णा प्रवातकिसलयवद्वेपमाना न कथञ्चित् प्रकृतिं प्रतिपद्यते। श्रुत्वा देवः प्रमाणम्' इति व्यजिज्ञपत्। तच्छ्रुत्वा झटिति शान्त-रोषेरावती—'त्वरतामार्यपुत्रः, कुमारीमाश्वासयतु यावन्न तस्याः सन्त्रासजनितो विकारो वर्धते' इति वदन्ती राजानं त्वरयामास। तथाभिहितो राजा विपदमपि तां सम्पदं मन्यमानः सत्वरपदस्ततो निर्जगाम। गौतमोऽपि परं परितोषं गतः 'साधु रे पिङ्गलवानर साधु, काले कृतस्त्वया भ्रातुरुपकारः' इति ब्रुवन् राजानमन्वगात्॥

मालविकया कृतदोहदस्तपनीयाशोकस्तावदपूर्ण एव पञ्चरात्रे मुकुलैः सन्नद्धो मालविकाया दिष्टमिष्टफलोन्मुखं शशंस। तस्यां तथाचण्डीभूता धारिणी तपनीयाशोककुसुमवृत्तान्तेन प्रसाद-सुमुखी समजनि। अनन्तरमशोकं सा कृतसंस्कारविधिं वेदिका-बन्धेन परिजनैः परिष्कारयामास। मालविकां च प्रसाधनकर्म-कुशलया कौशिक्या विवाहनेपथ्येनालङ्कारयामास। अवसरेऽस्मिन् विदर्भदेशात् परितोषकरः समरवृत्तान्तः समागतः। यज्ञियः पशुरिव यज्ञसेनः शूरैर्वीरसेनप्रमुखैः सैनिकैर्लीलयैव वशीकृतः। मोचितश्च तस्य दायादो माधवसेनः। महासाराणि रत्नानि शिल्पकारिकाभूयिष्ठाः परिजनाश्च राज्ञे वीरसेनेनोपायनतया प्रेषिताः। विजयवृत्तान्तेनानेन सर्वेऽप्यमन्दमानन्दं भेजिरे॥

धारिणी मालविकायै तपनीयाशोकदोहदाचरणस्यानुरूपं वरं दातुकामा—'आर्यपुत्रेण साकमशोकतरोः कुसुमसमृद्धिं प्रत्यक्षीकर्तुमिच्छामि' इति सव्याजं राज्ञे सन्दिश्य स्वयं मालविकां पुरस्कृत्य सपरिजना प्रमदवनं जगाम। आत्मनः कौतुकालङ्कारस्य निमित्तमुत्प्रेक्षमाणापि मालविका पूर्वानुभूतं भयमनुस्मरन्ती पर्याकुलैवाभूत्। राजापि धारिण्याः सन्देशमनुसृत्य गौतमेन सह प्रमदवनं जगाम। आत्मनः सन्निधानेऽपि मालविकां नयनपथादपनीतामालक्ष्य राज्ञो हृदयं मनोरथपथमारुरोह। सर्वेऽप्यशोकमूलं प्राप्य कमनीयां तपनीयाशोककुसुमशोभामवलोकयामासुः॥

विदर्भदेशोपायने द्वे शिल्पकारिके मार्गपरिश्रमादलसशरीरे इति पूर्वमप्रेषिते सम्प्रति प्रधानामात्यवचनात् कञ्चुकी राजान्तिकमुपनिन्ये। ते च मालविकामवलोक्य सविस्मयम् 'अहो अस्माकं भर्तृदारिका' इत्यब्रूताम्। कथमेषा वो भर्तृदारिकेति राज्ञा पृष्टे ते ग्रहणविप्लवान्तं वृत्तान्तं कथयामासतुः। तद्वचनात् तां मगधाधिपतेर्माधवसेनस्य सोदर्यां विज्ञाय धारिणी कथं राजदारिकेयम्, चन्दनं खलु मया पादुकोपयोगेन दूषितमिति सानुशया बभूव। तां तथाऽनुशोचन्तीं पण्डितकौशिकी—'देवि, नात्रानुशयः कार्यः। अनिर्ज्ञाता देवता अप्येवमवधूयन्ते' इति वदन्ती सान्त्वयामास। शिल्पकारिके ते यतिवेषधारिणीं कौशिकीं स्वरसंयोगेन व्यभावयताम्॥

ततो राज्ञा पृष्टा सा कथाशेषं तेभ्यः कथयामास। तदधिगत्य धारिणी—'भगवति, त्वया मालविकामभिजनवतीमनाचक्षाणया न साम्प्रतं कृतम्, येनेयं देवीशब्दयोग्या प्रेष्यभावेनावधीरिता' इत्यवादीत्। पण्डितकौशिकी धारिणीं समादधती 'मैवम्, न खल्वेतन्मया कारणेन विना कृतम्। इयं पितरि जीवति केनापि लोकयात्रागतेन सिद्धादेशेन साधुना मत्समक्षमादिष्टा संवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति। तमवश्यंभाविनमादेशं त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मयैतत्साधु कृतमिति पश्यामि' इति प्रत्यवोचत्। तच्छ्रुत्वा धारिणी विगतानुतापा बभूव ॥

अवसरेऽस्मिन् कञ्चुकी प्रविश्य पुष्पमित्रस्य सकाशादागतं सप्राभृतकं लेखं राज्ञे समर्पयामास। राजा सादरमादाय लेखमुद्घाट्य वाचयति—स्वस्ति यज्ञशरणात् सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात् परिष्वज्यानुदर्शयति। विदितमस्तु—योऽसौ राजसूययज्ञे दीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य संवत्सरोपावर्तनीयस्तुरगो विसृष्टः स सिन्धोर्दक्षिणरोधसि चरन् यवनानामश्वानीकेन प्रतिरुद्धः। तत उभयोः सेनयोर्महानासीत् सम्मर्दः ॥

ततः परान् पराजित्य वसुमित्रेण धन्विना।
प्रसह्य ह्रियमाणो मे वाजिराजो विनिर्जितः ॥

सोऽहमिदानीमंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये । तदिदानीं कालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसन्दर्शनायागन्तव्यम्' इति ॥

लेखस्य पूर्वार्धे वाच्यमाने यथा यथा विषादमगमद्धारिण्या हृदयं तथा तथा तस्यैवोत्तरार्धे पठ्यमाने प्रमोदस्य परां काष्ठामारुरोह । सत्यमिदानीं वीरसूरस्मीत्यमन्यत सा । कलसेन यूथनाथायितमिति वन्दन्तः सर्वे वसुमित्रस्य शौर्यमभ्यनन्दन् । राजापि लेखार्थेनानुगृहीतमात्मानं मन्यमानः पुत्रविजयवृत्तान्तेनोद्वेलितानन्दः सद्यः सर्वान् मौर्यसचिवप्रभृतीन् बन्धनान्मोचयामास। यज्ञसेनमाधवसेनौ च विदर्भराज्यं विभज्य पृथक् वरदायाः कूले राज्यद्वये स्थापनीयाविति मन्त्रिपरिषदमाज्ञापयामास ॥

अनन्तरं प्रमोदविवशा धारिणी—भगवति, त्वयाऽनुज्ञाताऽहमिच्छाम्यार्यसुमतिना प्रथमसङ्कल्पितामार्यपुत्राय देवीशब्दभाजं मालविकां प्रतिपादयितुम्, इत्येवमाभाष्य तदनुमत्या सा—'इमामार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु' इत्यवोचत् । राजापि नववर इव लज्जां नाटयन् नोल्लङ्घितपूर्वा मया देव्याज्ञेत्युक्त्वा मालविकां पाणौ जग्राह ॥



# ॥ विक्रमोर्वशीयकथा ॥

प्राभासीद्रजनिः । पूर्वाद्रिशिखरमारूढो भगवान् भास्करः कोमलारुणैरात्मनः किरणैः प्राकाशयद्दश दिशः । सवितृवंशालङ्कारभूतः पुरूरवाः सूर्योपस्थानान्नभोमार्गेण प्रतिन्यवर्तत। प्रतिनिवर्तमाने तस्मिन्नकस्मादाकाशे 'परित्रायतां परित्रायतां यः सुरपक्षपाती यस्य वाम्बरतले गतिरस्ति' इत्युच्चैःस्वरेणाप्सरसां गणः शरणमाचक्रन्द। आपन्नार्तिहरणपटीयसा विक्रमयशसा भासमानः पुरुरवाः कुररीणामिव तासामाक्रोशं श्रुत्वा ससम्भ्रममुपसृत्य "अलमाक्रन्दितेन, कथ्यताम्, कुतो भवत्यः परित्रातव्याः" इत्यपृच्छत् । अप्सरसः सम्भ्रान्ताः—'शृणोतु महाराजः या खलु तपोविशेषपरिशङ्कितस्य सुकुमारं प्रहरणं महेन्द्रस्य, प्रत्यादेशो रूपगर्वितायाः श्रियः, अलङ्कारः स्वर्गस्य सा नः प्रियसख्युर्वशी कैलासनाथं कुबेरमुपसृत्य निवर्तमाना समापत्तिदृष्टेन हिरण्यपुरवासिना केशिना दानवेनार्धपथ एव चित्रलेखाद्वितीया वन्दिग्राहं गृहीत्वा बलादपाह्रियत' इति न्यवेदयत् ॥

तदनु तासामेव मुखात् तं जाल्मं पूर्वोत्तरेण दिग्विभागेन गतं विज्ञाय राजा 'यद्येवं मुच्यतां विषादः, यतिष्ये वः सख्याः प्रत्यानयनाय, प्रतिपालयन्तु भवत्यो मामस्मिन् हेमकूटशिखरे' इत्यभिधाय तरसा रथं परावर्त्य जवविजितवैनतेयगतिरैशानीं दिशं सहसा जगाम । गत्वा च यथानिर्दिष्टं प्रदेशम्, मुहूर्ते

बद्धयुद्धो राजा वायव्येनास्त्रेण दानवान् लवणाम्बुराशौ प्रक्षिप्य चित्रलेखासनाथां भयेन मोहमुपगतां निश्वसितमात्रसंभावितजीवितां वेपमानावयवामुर्वशीं रथमारोप्य प्रत्यानिनाय। चित्रलेखावलम्बितशरीरा भयनिमीलितनयनयुगला सा राज्ञा सख्या च पर्यवस्थाप्यमाना रोधःपतनकलुषा गङ्गेव शनैः प्रसादं जग्राह। उदमीलयन्नयनयुगलम्। व्यलोकत पार्श्वगतं महेन्द्रसदृशानुभावं राजानम्। विलोक्य च विकसिताक्षी 'उपकृतं खलु दानवैः' इति मनस्यचिन्तयत्। राजापि प्रत्यागतप्रसादां निरतिशयरूपलावण्यां तां निर्वर्ण्य दत्तफलमात्मनः समरव्यापारक्लेशममन्यत।

हेमकूटशिखरं गताः सख्यः 'अपि नाम स राजर्षिरुद्धरेन्नो हृदयशल्यम्' इत्यालपन्त्यः सोत्कण्ठमुच्चक्षुषस्तस्थुः। उच्चलितहरिणकेतनं राज्ञः सोमदत्तं नाम रथं दूरतः समवलोक्य 'अकृतार्थो न निवर्तिष्यते' इत्यवधार्य ताः समुल्लसितचेतसोऽभवन्। चित्रलेखाद्वितीयां सखीमादायोपस्थितं राजानमवलोकयन्तीनां हर्षेणोच्चचाल सखीनां हृदयम्। अपरिक्षताङ्गं राजानं प्रत्यानीतां प्रसन्नमुखीं प्रियसखीं च नेत्राभ्यां पिबन्तीनां तासां न हृदये ममौ प्रमोदः। चित्रलेखाया हस्तमवलम्ब्य रथादवतीर्णां प्रत्यागतामार्तवीं श्रियं लता इव गाढमालिङ्गन्त्यो हर्षोत्फुल्लनयनाः 'अनल्पवीर्यो महाराजः कल्पशतानि पृथिवीं परिपालयन् भवतु' इत्यनुरूपैः स्मितधवलैर्वचनैः प्रियकारिणं राजानं रञ्जयामासुः॥

अत्रान्तरे चित्ररथो नाम गन्धर्वराजः समेत्य राजानं सप्रश्रयं व्यजिज्ञपत्—'वयस्य, केशिना हृतामुर्वशीं नारदादुपश्रुत्य प्रत्याहरणार्थमस्याः शतक्रतुना गन्धर्वसेना समादिष्टा। ततो वयमन्तरा चारणेभ्यस्त्वदीयं जयोदाहरणं श्रुत्वा त्वामिहस्थमुपगताः स्मः। स भवानिमां पुरस्कृत्य सम्प्रत्यस्माभिः सह मघवन्तं द्रष्टुमर्हति। महत् खलु मघोनः प्रियमनुष्ठितं तत्रभवता' इति। तन्निशम्य राजा विक्रमस्यालङ्कारमनहङ्कारं बोधयन्निव दानवविजये वज्रिण एव वीर्यं हेतुमुपन्यस्य 'सखे, नायमवसरो मम शतक्रतुं द्रष्टुम्। त्वमेवात्रभवतीं प्रभोरन्तिकं प्रापय' इत्यवोचत् ॥

'यथा भवान् मन्यते' इत्यभिधाय चित्ररथः प्रतस्थे। अप्सरसोऽपि राज्ञे सप्रणामं धन्यवादानुदीर्य चित्ररथमनुप्रस्थिताः। उपकारिणमपि प्राणदातारमपि राजानं लज्जावशादाप्रष्टुमशक्नुवत्युर्वशी सखीमुखेन तमामन्त्र्य सुकुमारैस्तस्य गुणैः सन्दानितेव मन्दं मन्दमुच्चचाल। कटाक्षविक्षेपच्छद्मना च विक्षिपन्तीव राज्ञो हृदयेऽनुरागबीजानि पदे पदे परिवृत्य सस्पृहमवलोकयामास। अथ सा कथञ्चित् प्रस्थिता न केवलं प्रियसखीमिव राज्ञः कीर्तिं किन्तु तदीयं हृदयमप्यात्मना सह नयन्ती गगनमुत्पपात ॥

यस्मिन्नहनि भगवतः सूर्यस्योपस्थानं कृत्वा प्रतिनिवृत्तो राजा ततः प्रभृति शून्यहृदय इवालक्ष्यत। तत्र केनापि बलवता हेतुना भवितव्यमिति मत्वा तद्रहस्यान्वेषणाय राज्ञः पट्टमहिष्या काशीराजपुत्र्या विसर्जिता निपुणिका नाम चेटी राज्ञो मित्रं माणवक-

मन्विष्यन्ती प्रस्थिता। ब्रह्मबन्धुरसौ चपलो वटुः। विरलतृणाग्रलग्नमिव तुषारसलिलं न चिरं तस्मिन् रहस्यं तिष्ठति। तमन्विष्य परिक्रामन्ती सा रहस्यभेदभयेन विरलजनसम्पाते विमानप्रतिच्छन्दपरिसरे क्वचिदालिखितं वानरमिव तिष्ठन्तं तं ददर्श। उपसृत्य च तं ववन्दे ॥

तामवलोकितवतो विदूषकस्य हृदयं भित्वा निष्क्रामदिवासीत राजरहस्यम्। सङ्गीतव्यापरमुज्झित्वा तस्या आगमने कारणं पृष्टा सा सस्मितमभ्यधात्—देव्या वचनादार्यमेव द्रष्टुमागताहम्। यन्निमित्तमिदानीं भर्ता समुत्कण्ठितः तस्याः स्त्रिया नामधेयेन भर्त्रा देव्यालपिता। तेन देवी महद्दुःखमनुभवन्ती त्वामिदमाह—'आर्यमाणवको न जातु दुःखितां मामुपेक्षते। तस्मादत्र प्रतीकारं चिन्तयितुमर्हति भवान्' इति। तन्निशम्य विदूषकः—'कथं स्वयमेव तत्रभवता रहस्यभेदः कृतः? किमिदानीमहं जिह्वायन्त्रणेन दुःखमनुभवामि' इति विचिन्त्य निपुणिकामपृच्छत्—किमामन्त्रिता तत्रभवती उर्वशीति। उर्वश्या दर्शनेनोन्मादितस्तत्रभवान् न केवलं तत्रभवतीं किन्तु मामपि शश्वत् उर्वशीत्यामन्त्रयते। गच्छ, विज्ञापय देवीं—'यतिष्ये तावत् देवं मृगतृष्णिकाया निवर्तयितुम्' इति। राज्ञो रहस्यदुर्गस्य भेदनेन परितुष्टा निर्जगाम निपुणिका॥

माणवको धर्मासनादुत्थाय निर्गच्छन्तं राजानमुपससर्प। राजा तमवलोक्य—अपि रक्ष्यते रहस्यनिक्षेपः इत्यप्राक्षीत्। माणवको निपुणिकया निपुणं प्रतारितमात्मानं मन्यमानो निर्वचनः स्थितः।

'किं भवांस्तूष्णीमास्ते' इति साशङ्केन पुनः पृष्टः—'सखे, एवं मया दृढं नियन्त्रिता जिह्वा यथा भवतोऽपि सहसा प्रतिवचनं दातुं न पारयामि इत्यवोचत्। 'युक्तम्' इति वदन् राजा तमादायोर्वशीगतचित्तः पर्युत्सुकमात्मानं विनोदयितुं वसंतावतारसुभगं प्रमदवनमगच्छत् ॥

तत्र च भ्रमरसङ्घट्टपतितैः कुसुमनिकरैः कृतोपचारो विविक्तमतिमुक्तलतामण्डपं प्रविश्य रमणीयं मणिशिलापट्टकमध्यासीनः सुराङ्गनासङ्गतमेव विस्रब्धालापं कर्तुमारब्धो राजा माणवकमभाणीत्—'सखे, अतिस्नेहः खलु कार्यदर्शीत्यभिधीयसे। चिन्त्यतामुपायो यथा सफलप्रार्थनो भवेयम्' इति। विदूषकः प्राह—'दिव्यरसाभिलाषिणा भवता चातकव्रतं गृहीतम्। किमत्र मया क्रियताम्। तत्रभवत्या उर्वश्याः प्रतिकृतिमालिख्य तामवलोकयंस्तिष्ठ, येन निर्वृतिमेष्यति ते हृदयम्' इति ॥

राज्ञः प्रथमदर्शनादारभ्य विवशीभूतहृदयोर्वशी नन्दनवनवातेनाप्यानन्दमविन्दमाना प्रभवता राजगुणेन बलादाकृष्यमाणेव चित्रलेखया सह पुरूरवसः सकाशं प्रस्थिता। केशिवृत्तान्तप्रचोदितेन भगवता देवगुरुणा ततः प्रभृत्यपराजितां नाम शिखाबन्धनविद्यामुपदिशता त्रिदशपरिपन्थिनामलङ्घनीया कृतोर्वशी निर्विशङ्कमाकाशमार्गेण सञ्चरमाणा समाजगाम। अवतरन्ती च नभःस्थलात् यमुनासङ्गमविशेषपावनेषु भगवत्याः भागीरथ्याः सलिलेषु संक्रान्तप्रतिबिम्बस्य स्थानान्तरगतस्वर्गवद्विभ्राजमानस्य

प्रतिष्ठानस्य शिखाभरणायमानं राजर्षेर्भवनमवलोकयामास। राजवृत्तान्तविजिज्ञासया च नन्दनवनैकदेशदेश्ये प्रमदवनोद्देशेऽवततार। दिष्ट्या तत्रैव लतामण्डपगतमापन्नानुकम्पिनं सख्या सह विस्रब्धालापं कुर्वन्तं राजानमद्राक्षीत्। स्वसम्बद्धमेवालापं श्रुतवत्यास्तस्याः परमानन्दतुन्दिलमजायत हृदयम्॥

विदितराजहृदयापि स्वयं सहसा तमुपसर्तुमशक्नुवती प्रभावनिर्मितेन भूर्जपत्रेण मदनलेखं, लिखित्वा प्राक्षिपत्। संमुखे पतितं तमादाय विदूषको राज्ञः करे ददौ। राजा चोर्वश्या लेखोऽयमिति ज्ञात्वा सादरः समानानुरागसूचकान्यक्षराण्यनुवाच्य नास्त्यगतिर्मनोरथानामित्युल्लसितहृदयः समभूत्। 'दिष्ट्या बुभुक्षितेन भवता स्वस्तिवाचनकमुपलब्धम्' इत्यवोचद्विदूषकः। स्वांगुलिस्वेदेन दूष्येरन्नक्षराणीति राजा लेखं वयस्यस्य हस्तेऽर्पयामास॥

उपगमकातरं हृदयं पर्यवस्थापयन्त्युर्वशी प्रथमं चित्रलेखां प्राहिणोत्। तामवलोक्य सहर्षस्मितो राजा 'चित्रलेखे, क्व नु मे प्रियसखी' इत्यपृच्छत्। ननु प्रथमं मेघराजिर्दृश्यते पश्चात् "विद्युल्लता" इति सा प्रत्यवोचत्। ननु प्रथमं 'चित्रलेखः' पश्चात् 'चित्रलेखा' ततो 'विचित्रलेखा' इति भव्य एवायं क्रम इत्यभ्यधात् विदूषकः। अथ सा राज्ञो दूतीभूयं प्राप्तया चित्रलेखया प्रवेशिता राजानमुपसृत्य ववन्दे॥

ततः समारब्धे तत्कालोचिते रसमये संलापे महेन्द्रप्रेषितो देवदूतः समागत्य 'चित्रलेखे, त्वर्यतां, महर्षिणा भरतेन भवतीषु

शिक्षितं ललिताभिनयं प्रयोगमद्य सलोकपालो मरुतां भर्ता द्रष्टुमुत्सुकः' इत्यावेदयत्। अनतिक्रमणीयतया मघवदाज्ञायाः सद्य एव महाराजेनाभ्यनुज्ञातोर्वशी चित्रलेखया सह दुर्मनायमाना निजगाम॥

उर्वशीनिर्गमननिरालोकं हृदयं विनोदयितुकामो राजा विदूषकस्य हस्तेऽर्पितं भूर्जपत्रलेखं प्रार्थयत। परं स लेख उर्वशीदर्शनविस्मितस्य विदूषकस्य हस्तात् परिभ्रष्टः काप्यदर्शनं गतः। सर्वत्र प्रमादी वैधेय इति वदता राज्ञा तदन्वेषणाय नियुक्तो माणवकः—नन्वितो भवेदितो भवेदिति विचेतुं प्रवृत्तः। अत्रान्तरे लतागृहं प्रविष्टो राजा माणवकेन सह किमपि मन्त्रयमाणस्तिष्ठतीत्याकर्ण्य काशीराजपुत्री निपुणिकयानुगम्यमाना तत्राजगाम। आगच्छन्त्याश्च मारुताहृतो भूर्जपत्रलेखस्तस्या नूपुरकोट्यां लग्नोऽभूत्। गृहीत्वा च पश्यन्ती 'नूनमयं भर्तारमुद्दिश्य रचित उर्वश्याः काव्यबन्धो भवितुमर्हति' इत्याकलय्य कोपवशं गता लेखहस्ता लतामण्डपं प्रविश्य तल्लेखान्वेषणव्यग्रं राजानमब्रवीत् 'आर्यपुत्र, अलमावेगेन, अयं स भूर्जपत्रलेखः' इत्युक्त्वा लेखमर्पयत्। राजा सम्भ्रान्तः देव्यै स्वागतं व्याजहार। विदूषकः—'दुरागतमिदानीं संवृत्तम्' इति चिन्तयन् भयेन कम्पमानकलेवरस्तस्थौ॥

'किमत्र प्रतिवक्तव्यम्' इत्यपवार्य राज्ञा पृष्टो विदूषकः—'लोप्त्रेण गृहीतस्य कुम्भीलकस्य पादपतनमेव प्रतिवचनम्' इति प्रत्यवोचत्। अब्रवीच्च देवीं प्राञ्जलिः—'भवति, त्वरयास्य

पानभोजनं यत् पित्तोपशमनसमर्थं भवति ' इति। विदूषकस्य वचनं श्रुत्वा राजा कुपित इवाह—' मूर्ख, किं मां बलादपराधिनं कल्पयसि ' इति। तन्निशम्य राज्ञी—' न भवानपराधी। किन्त्वहमेवापराधिनी, या खलु प्रतिकूलदर्शना भूत्वा तवाग्रतस्तिष्ठामि ' इत्युक्त्वा द्रुतपदं प्रस्थिता। राजा तस्याः पादयोः पपात। सा तु सकोपं प्रणिपातमुल्लङ्घ्य सपरिवारं निर्जगाम। माणवको राजानमाह—' उत्तिष्ठ सखे उत्तिष्ठ प्रावृण्नदीवाप्रसन्ना गता देवी। अनुकूलमेतदत्र भवतः। न खल्वक्षिदुःखितोऽभिमुखे दीपशिखां सहते ' इति। विदूषकस्यैतद्वचनं न राज्ञः प्रीतये बभूव। उर्वशीगतमनसोऽपि तस्य देव्यां स एवासीत् बहुमानः। तस्या निर्गमनेन भृशं व्याकुलतां गतोऽपि राजा प्रणिपातलङ्घनेन सा पश्चात्तापं गमिष्यतीति धैर्यमवलम्बमानो माणवकेन सह निरगात्॥

भवितव्यतानुविधायीनि भवन्ति जनिमतामिन्द्रियाणि। यतो ह्यमर्त्यलोकं गताप्युर्वशी मर्त्यलोकालङ्कारभूतं पुरूरवसमेव मनसा ध्यायन्ती विषयान्तरविमुखी बभूव। तदेकचित्ता न बाह्यं किञ्चिदचेतयत्। वपुषा परं तत्र सन्निहिताऽऽसीन्न मनसा। देवानां सदसि यथानिश्चितं सरस्वतीकृते काव्यबन्धे प्रयोगेणाभिक्रियमाणे लक्ष्मीभूमिकायां वर्तमाना सा गृहीतवारुणीभूमिकया मेनकया—' सखी, समागता एते त्रैलोक्यपुरुषाः सकेशवाः सर्वे लोकपालाः, कतमस्मिंस्ते भावाभिनिवेशः ' इति पृष्टा सा पुरुषोत्तम इति भणितव्ये शून्यहृदयतया पुरूरवसीत्यभाणीत्।

एवं तया सरसः काव्यप्रयोगो विरसतामनायि। तेन सामर्षो भरतमहर्षिः 'यन्ममोपदेशस्त्वया लङ्घितस्तत्ते दिव्यं स्थानं न भविष्यति' इति तामशपत्। महेन्द्रः पुनः प्रेक्षणावसाने लज्जावनतमुखीं तामाश्वासयन् 'यस्मिन् त्वं बद्धभावासि तस्य मे रणसहायस्य राजर्षेः प्रियमवश्यमाचरणीयम्। सा त्वं सुराङ्गनोद्गीयमानयशसं पुरूरवसमुपातिष्ठस्व यावत् त्वयि स दृष्टसन्तानो भविष्यति' इत्यन्वग्रहीत्। 'कदाचित् प्रमादोऽपि प्रमोदाय कल्पते' इत्याकलयन्ती सा महता हर्षेण दिवं परित्यज्य भुवमाजगाम॥

प्रणिपातलङ्घनेन जातानुशया काशीराजपुत्री व्रतापदेशेन स्वीयमपराधं प्रमार्ष्टुकामा मानमुत्सृज्य प्रथमं निपुणिकामुखेन पश्चात् कञ्चुकिमुखेन च—'मणिहर्म्यपृष्ठे सुदर्शनश्चन्द्रः। तत्राद्य देवेन सह प्रतिपालयितुमिच्छामि यावद्रोहिणीसंयोगः' इति राज्ञे सन्दिदेश। देव्याः सन्देशमनुसृत्य राजा प्रत्यासन्ने प्रदोषसमये विदूषकेण सह स्फटिकशिलामयेन गङ्गातरङ्गसश्रीकेण सोपानपथेनारुरोह मणिहर्म्यपृष्ठम्। भगवान् मृगलाञ्छनोऽपि पूर्वाद्रिशिखरमारुह्य हैमद्रवेण लिप्तमिवाकरोत् भुवनतलम्। देव्या आगमनं मुहूर्तात् परं भविष्यतीति कृत्वा राजा विविक्ते स्वामवस्थां विदूषकाय कथयन् उर्वशीवृत्तान्तमारेभे। अवसरेऽस्मिन् उर्वशी सुपर्वलोकादवदीर्य चित्रलेखयानुगता तत्राजगाम। आगत्य च तिरस्करिणीप्रतिच्छन्ना श्रोत्रपेयं तयोरालापं शुश्राव। आत्मीयमेव कथावस्तु प्रस्तूयमानमाकर्ण्य सा हर्षोल्लसितहृदया राजानमुपगन्तुमुद्युक्ताऽभूत्॥

अवसरेऽस्मिन्नुपवासनियमवेषा परिमितभूषा काशीराजपुत्री सपरिवारा यथासमयं तत्राजगाम। अब्रूत च कृतोपचारं राजानम्—'आर्यपुत्रं पुरस्कृत्य कोऽपि व्रतविशेषो मया सम्पादनीयः। तन्मुहूर्तमात्रमुपरोधः सह्यताम्' इति। तथा वदन्त्यामेव तस्यां राजा—'नैवायमुपरोधः किन्त्वनुग्रहोऽयं मे महान्' इति सापदेशमुपदर्शितादरः सस्मितमभ्यधात्। ततो दारिकाभिरुपनीतमौपहारिकं गृहीत्वा काशीराजपुत्री मणिहर्म्यगतांश्चन्द्रपादानानर्च। आचष्ट च राजानम्—'आर्यपुत्र, एषाहं देवतामिथुनं रोहिणीमृगलाञ्छनं साक्षीकृत्य सत्यवचनेनार्यपुत्रमनुप्रसादयामि—'अद्य प्रभृति यां स्त्रियमार्यपुत्रः प्रार्थयते या चार्यपुत्रस्य समागमप्रणयिनी तया सह मया प्रीतिबन्धेन वर्तितव्यम्' इति। एवमभिधाय सा राज्ञा निवार्यमाणापि व्रतशेषसमाप्तिं निमित्तीकृत्य दारिकाभिः सार्कं निर्जगाम। गतायां च तस्यां विदूषकः—'छिन्नबन्धे मत्स्ये पलायिते निर्विण्णो धीवरो भणति धर्मो मे भविष्यतीति। असाध्य इति वैद्येनातुर इव स्वैरं मुक्तोऽत्रभवांस्तत्रभवत्या' इति सोपहासमुदीरयामास॥

उर्वशी तावत् काशीराजपुत्र्याः शचीसमानया रूपसम्पदा स्त्रीजनदुर्लभेन भर्तृच्छन्दानुरोधेन च भृशं विस्मिता विस्मृतात्मा क्षणं तस्थौ। तदनु महानुभावाया देव्याः समयेन परितुष्टान्तरङ्गा चित्रलेखया सह निर्विशङ्कं राजानमुपजगाम। राजापि चित्रीयमाणचेतास्तामुपचारवचनैः सच्चकार। ततश्चित्रलेखामुखादुर्वश्याः

शापवृत्तान्तमाकर्ण्य भृशं तुष्टो राजा धन्यमात्मानममन्यत। परेद्युश्चित्रलेखा राजानमुर्वशीं चामन्त्र्य कथमपि विसर्जिता ताभ्यामप्सरोवारपर्यायप्राप्तं सूर्योपस्थानं निर्वर्तयितुं देवलोकं जगाम॥

अनन्तरमुर्वशी पृथिवीश्वरममात्यविनिवेशितविश्वम्भराभारमादाय विहर्तुं गन्धमादनं जगाम। तत्र मन्दाकिन्याः पुलिने सिकताकेलिभिः क्रीडन्ती 'उदयवती' नाम विद्याधरदारिका तेन राजर्षिणा निध्यातेति कुपिता सुरयुवतिरुर्वशी भर्तुरनुनयमप्रतिपद्यमाना गुरुशापसम्मूढहृदया स्त्रीजनपरिहरणीयं कुमारवनं प्रविवेश। यत् खलु भगवता शाश्वतं कुमारव्रतमनुतिष्ठताऽध्यासितम्। या स्त्री तद्वनं प्रविशति सा लताभावेन परिणंस्यतीति तेन समयः कृतः। तत्प्रभावेण प्रविष्टमात्रैवोर्वशी लतारूपेण पर्यणंसीत्॥

अथ स राजर्षिस्तस्मिन्नेव कानने प्रियतमां विचिन्वन्नहोरात्रानतिवाहयामास। तदा सुदुःसहः कालाम्बुदकरालो वर्षाकालोऽप्युपस्थितः। परावृत्तभागधेयानां दशां प्राप्तो राजा दुःखानुबन्धीनि दुःखान्यनुभवन् विजने वने प्रियामन्विष्यन्नेकाकी बभ्राम। 'किं नु कुत्रापि निलीय तिष्ठेत्, उत स्वर्गायोत्पतिता स्यात्, उताहो दानवेनापहृता भवेत्' इत्यनेकधा वितर्कयन्नुन्मत्तचित्तः पुरूरवाः किं किं न चकार शोकेन। गगनचारिणं विद्युत्वन्तं कालमेघमवलोक्य प्रियापहारिण मषीमलीमसवपुषं दानवं मत्वा—'अरे, दुरात्मन्, तिष्ठ तिष्ठ। क्व मे प्रियतमामादाय गच्छसि' इति

क्रोशन् महता रोषेण तमभ्ययुङ्क्त । ततस्तं विभाव्य पश्यन् नवजलधरमवगत्य—'ननु राजा कालस्य कारणम् । तत् किमहं तापवृद्धिकारिणं जलदकालं न प्रत्यादिशामि' इत्यभिलपन्नुन्मत्त इव तं प्रहर्तुमभ्युद्यतः । सेन्द्रगोपं नवशाद्वलमवलोक्य ओष्ठरागारुणैर्नयनजलकणैरङ्कितं रुषा स्खलितगतेः प्रियायाश्च्युतं कञ्चुकं मत्वा तद्ग्रहणायानुधावन् विप्रलब्धमात्मानमद्राक्षीत् । स्पृहणीयमपि प्रावृषेण्यं प्रकृतिरामणीयकं न प्रियाविरहिणस्तस्य प्रमोदायाकल्पत । न विद्युल्लेखारुचिरमभ्रं, न च मारुताधूतो निचुलमञ्जरीनिकरः, नापि मृदुपवनविभिन्नबर्हभारः पयोदानुदीक्ष्य पटुतरमारटन् केकी, न चापि धारासारमनोहरः सानुमान् तस्य हृदयमुल्लासयामास ॥

अदृष्टजनसञ्चारेऽत्र कान्तरे कुत्र गतेति कथं नु तत्रभवती मया लक्षयितव्या । नूनं न सा वरतनुर्वसुमतीं पद्भ्यां स्पृशन्ती गता स्यात् । यतोह्यभिवृष्टसिकतासु वनस्थलीषु तस्याः पदचिह्नानि नोपलभ्यन्ते । 'कथं नु खलु मया प्रियायाः प्रवृत्तिरवगन्तव्या' इति चिन्तयन् खिद्यमानमानसो राजा पार्श्वतो दृष्टं खगं मृगं तरुं लतां चापि प्रियायाः प्रवृत्तिमपृच्छत् । 'सखे, शुकोदरश्यामकञ्चुका फेनधवलमृदुलवसना मन्दारकुसुमसुन्दरकेशपाशा सर्वाङ्गसुन्दरी कापि वनिता त्वया क्वापि किं विलोकिता? कोपादन्तर्बाष्पनयनानयनाऽभिरामा मे प्रियतमा संरम्भपतितं वसनमाकर्षन्ती स्खलितगतिः प्रचलन्ती किं नु भवता विलोकिता? सुकेशी,

सुगात्री सुनयना सुखालोका अपि क्वापि निलीय तिष्ठन्ती त्वया दृष्टा? युवतिशशिकला यूथिकाशबलकेशी पृथुललोचना मे हृदयवल्लभा किमनेन वर्त्मना प्रयाता? इत्येवमग्रतो दृष्टं मयूरमपि मरालमपि कोकिलमपि मधुकरमपि चक्रवाकमपि सारङ्गमपि मातङ्गमपि शिलोच्चयमपि सप्रश्रयमामन्त्रयन् यदा न तैः किञ्चित् प्रत्यूचे प्रत्युत गातुं नर्तितुं चारेभे तदा स राजा परिभवास्पदं दशाविपर्ययः, महदपि परदुःखं शीतलं सम्यगाहुः इत्याकलयन् भृशं विललाप। अथाप्यनिर्वेदप्राप्याणि श्रेयांसीति मत्वा भूयोऽपि विचेतुं प्रवृत्तः क्व नु खलु सा वरतनुर्गता स्यादिति व्याकुलमतिः परिबभ्राम॥

न तादृशा आकृतिविशेषाश्चिरं दुःखभागिनो भवन्ति। यतस्तत्र तथा बम्भ्रम्यमाणो राजा क्वचन शिलाभेदान्तरगतं प्रभालेपितं कमप्यभूतपूर्वतेजसं मणिं ददर्श। परं न राज्ञो हृदयं तेनाकृष्यत। प्रियाविरहितस्य मे किं मणिना इति मत्वा स तं न जग्राह। ततः प्रचलता तेन नातिदूरे तारगम्भीरः शब्दोऽश्रूयत। कुतोऽत्र मनुष्यस्येवाक्रोश इति विस्मितो राजा कर्णं ददौ। वत्स, गृह्यतामसौ संगमनीयाख्योमणिः शैलसुताचरणरागसम्भवः। धार्यमाणोऽसौ प्रियजनेन सङ्गममावहति इत्यमृतधारायमाणा वागकर्णिता। अये क एवं मय्यनुकम्पते इति विस्मितो राजा दिक्षु चक्षुः प्रक्षिपन् मृगचारिणं मुनिमेकमद्राक्षीत्। प्राणंसीच्च तं भक्त्या॥

अनन्तरं मुनिवचनगौरवात् तं मणिमादाय धृत्वा विचरन् क्वचन हृदयं विलोभयन्त्या मारुतान्दोलितपल्लवाङ्गुलिभिराह्वयन्त्येव लतया समाकृष्टो राजा द्रुतगतिरुपेत्य तां गाढमालिलिङ्ग । लता झटित्युर्वशीरूपेण परिणनाम । राजाप्युन्मादादुन्मुक्तः स्वामवस्थां प्रापद्यत । अभ्यन्तरकरणया तया लताभावेऽपि राज्ञः सर्वः शोचनीयो वृत्तान्तः प्रत्यक्षीकृतः । प्रकृतिं प्रतिपन्ना सा सानुशया राजानमवोचत्—'प्रसीदतु महाराजः । जानत्यपि कुमारस्य समयं गुरुशापमोहिता वनमिदं प्रविष्टास्मि, तत् क्षम्यतामपराधः' इति । राजा प्राह—'प्रिये, नात्रानुशयः कार्यः । अनतिक्रमणीयो विधिः' इति । अनन्तरमुभावपि मुदितहृदयौ राजधानीं जग्मतुः ॥

ततः प्रकृतिभिः सादरोपचारमनुरज्यमानो राजा राज्यं चकार । असन्तानत्वं वर्जयित्वा नान्यत् किमपि पर्यहीयत तस्य । एकदा तिथिविशेषे गङ्गायमुनयोः सङ्गमे राज्ञा साकमभिषेकार्थं गच्छन्तीभिः देवीभिः सङ्गमनीयमणिः किरात्या हस्ते समर्पितः । तया तालवृन्ताधारे निक्षिप्य नीयमानः स मणिरामिषशङ्कया झडित्या पतितेन गृध्रेणापहृतः । किराती तारमाक्रोशत् । राजा कृताभिषेकोऽसमाप्तनेपथ्य एव धनुर्धनुरितिवदन् द्रुतगत्या जगाम । सद्य एवानीतं यवन्या हस्तावापसहितं धनुः । स विहगः क्षणेनात्यूर्ध्वमुत्पत्य मण्डलचारी परिभ्रमन् व्योमैकान्तेऽलातचक्रसदृशं प्रभामण्डलमुत्पादयन्नलक्ष्यत । बाणपथातिवर्तिनं तमालक्ष्य राजा कञ्चुकिनमब्रवीत्—'लातव्य, मद्वचनादुच्यतां नागरिकः सायं

निवासवृक्षाश्रयी विचीयतां विहगदस्युरिति । तथेत्युक्त्वा निर्गतः कञ्चुकी मुहूर्तेन सशरमणिहस्तः प्रत्यागत्य तदुभयं राज्ञे समर्पयामास । मणिरद्भिः प्रक्षाल्य पेटके कृतः ॥

अथ केनायं विहगो व्यापादित इति जिज्ञासा समारब्धा । राजा शरगतान्यक्षराण्यवाचयत् । तत्रैतल्लिखितमासीत्—

उर्वशीसम्भवस्यायमैलसूनोर्धनुर्भृतः ।
कुमारस्यायुषो बाणः प्रहर्तुर्द्विषदायुषाम् ॥

तदनुवाच्य राजा—'अहं खलु विधिनाऽपुत्रः कृतः । कथमयं मम पुत्रस्य बाणः' इति विस्मयापहृतचेताः समभूत् । अत्रान्तरे भगवतश्च्यवनमहर्षेराश्रमात् कापि तापसी कुमारमेकं गृहीत्वा राजान्तिकमागत्य न्यवेदयत्—'शृणोतु महाराजः । एष दीर्घायुरायुर्जातमात्र एवोर्वश्या मम हस्ते न्यासीकृतः । तदिच्छामि देवीमुर्वशीं द्रष्टुम्' इति । तदनु राजवचनादानीतायामुर्वश्यां तापसी तामवलोक्य प्रोवाच—'भद्रे, एष ते तनय आयुः साम्प्रतं कवचहरः संवृत्तः । यत् क्षत्रियकुमारोचितं जातकर्मादिविधानं तत्सर्वमस्य भगवता च्यवनेनानुष्ठितम् । गृहीताखिलविद्यो धनुर्वेदेऽभिविनीतश्च वर्तते । अद्य पुष्पसमिदानयनार्थं मुनिकुमारकैः सह वनं गतेनानेन किञ्चिदाश्रमविरुद्धमाचरितम् । गृहीतामिषो गृध्रः कश्चित् पादपशिखरे निलीयमानोऽनेन लक्ष्यीकृतो बाणस्य । उपलब्धतद्वृत्तान्तेन भगवता च्यवनेनास्य निर्यात-

नायाहं समादिष्टा। तदस्य ते भर्तुः समक्षं निर्यात्यते हस्तनिक्षेपः' इति। एवमभिधाय सा राजानमुर्वशीं चामन्त्र्य प्रस्थिता पृष्ठत आत्मानमनुगच्छन्तं कुमारं सान्त्ववचनैर्निवर्त्य प्रययौ॥

उर्वशी यदा आपन्नसत्वा जाता तदा गर्भव्यक्तेः पूर्वमेव राजा नैमिषेयसत्ररक्षार्थं गतः संवत्सरं तत्रावात्सीत्। अवसरे तस्मिन्नुर्वशी तनयं प्रसूता च्यवनाश्रमवासिन्याः सत्यवत्या हस्ते समर्पितवती। किमर्थमेवं तनयः प्रच्छादित इति राज्ञा पृष्टोर्वशी सगद्गदं रोदितुमारेभे। न किञ्चित् प्रतिवचो ददे। हारायिताश्रुधारां तां सान्त्वयन् राजा—'प्रिये, पुत्रस्यागमनेन हर्षे दर्शनीये किमेवमश्रुधारां वर्षसि। न खलु किञ्चिदपराद्धं मया नापि मदुपजीविनाजनेन। निगृह्यतामयं शोकावेगः' इत्यवोचत्। तन्निशम्योर्वशी कथञ्चिन्निगृह्य बाष्पप्रसरं सगद्गदमवादीत्—'महाराज, यदा त्वं मयि समुत्पन्नस्य सुतस्य मुखं प्रेक्षिष्यसे तदा मया त्वां परित्यज्य देवलोकं गन्तव्यमिति महेन्द्रस्याज्ञा। तन्मया भवद्वियोगवित्रस्तया जातमात्र एवायं पुत्रकः प्रच्छन्नं सत्यवत्या हस्ते समर्पितः। तदेतावान् मे महाराजेन संवासः' इत्युक्त्वा स्वर्लोकं प्रति प्रतस्थे॥

राजा पुत्रमुखदर्शनेन लब्धाश्वासोऽपि दुरन्तेनोर्वशीविरहवृत्तान्तेन विद्धहृदयः प्रथममभ्रवृष्ट्या सिक्तस्य सद्य एव विद्युताऽभिहतस्य तरोः समवस्थां प्रपेदे। अवदच्च बाष्पावरुद्धकण्ठः—'प्रिये, नात्र त्वया विमनायितव्यम्। परवत्ता हि जनिमता-

मिच्छाभोगानाच्छिनत्ति। तस्मात् त्वं तत्रभवतो गोत्रभिदः शासने तिष्ठ। अहमपि तावदात्म जनुष्यायुषि राज्यभारमासज्य त्वद्विरहेण निरालोकामवनिं परित्यज्य विचरितमृगयूथानि वनान्याश्रयिष्ये' इत्यभिधाय पुत्रस्य राज्याभिषेकसम्भारसम्पादनाय मन्त्रिपरिषद्-माज्ञापयामास। तन्निशम्य मातापितृविरहकातर आयुः—'नार्हति तात पुङ्गवधारितायां धुरि दम्यं नियोजयितुम्' इति प्रार्थयत। राजा तनयं सान्त्वयन्—'जात, किमेवं क्षत्रियवंशाङ्कुरस्त्वमितर इव शङ्कसे। गन्धगजः कलभोऽपि सन् किं न गजयूथस्य नेता भवति। भुजङ्गश्च शिशुरपि करालगरलः किं न परेषां प्राणानप-हरति। एवं बालावस्थोऽपि रक्षणीयान् रक्षितुं दण्डनीयान् दण्डयितुं च प्रभविष्यसि। तद्दूरीकुरु साध्वसभरम्। अङ्गीकुरु राज्यधुरम्' इत्यादरेणालिङ्गन्निजगाद।

एवं महति विप्लवे वर्तमाने पर्यश्रुलोचने राजपरिजने विषण्ण-वदने मन्त्रिजने कुतोऽपि कोऽप्यननुभूतपूर्वः प्रकाशः सर्वस्य चक्षुः प्रतिघ्नन्नाकाशादापपात। किमिदमिति साश्चर्यं नभसि दत्तदृष्टयस्ते त्वरितगत्यावतरन्तं तेजोनिकरमद्राक्षुः। अहो नारद इत्यवादीदुर्वशी। सत्वरगतिः स नारदो जङ्गमः कल्पवृक्ष इव नभस्थलादवतीर्य राजानमुपसृत्य तेन यथाविधि सत्कृतस्तमभ्य-धात्—'विजयतां मध्यमलोकपालः। प्रभावदर्शी वासवो वन-गमनाय कृतबुद्धिं भवन्तमनुशास्ति—त्रिकालदर्शिभिर्मुनिभिरादिष्टो भयावहः सुरासुरसङ्गरो भावी। भवांश्च सांयुगीनः सहायो नः।

तेन त्वया शस्त्रं न संन्यस्तव्यम्। इयं चोर्वशी यावज्जीवं तव सहधर्मचारिणी भवतु' इति। 'परवानस्मि महेन्द्रेण' इति वदन् पुरूरवाः शिरसा जग्राह मघवदाज्ञाम्। निर्वर्तयामास च यथा विभवमायुषो यौवराज्याभिषेकम्। उर्वश्यपि पुत्रस्य यौवराज्य-लाभेन भर्तुरविरहेण च परमानन्दमनुभवन्ती विस्मृतस्वर्लोक-सुखा वसुमतीमेव बहुमन्यमाना सुखमुवास॥



# ॥ शाकुन्तलकथा ॥

—:o:—

अथाविर्बभूव सुभगसलिलावगाहो वनान्तवातरमणीयो ग्रीष्मसमयः। पुरुवंशावतंसो दुष्यन्तः सपरिवारो मृगयार्थं श्वापद-शरण्यमरण्यं जगाम। तत्र चैकदा मृगयां विचरन् शरपतनभयात् भूयसा पश्चार्धेन पूर्वकायं प्रविश्य जीविततृष्णया धावन्तं कृष्णसारं ददर्श। तस्मिन्नेव बद्धदृष्टिरधिज्यकार्मुको राजा त्वरितगतिना रथेन तमन्वधावत्। अयं विद्धोऽयं विद्ध इति चिन्तयन्नेव स सारङ्गेण सुदूरमध्वानमतिक्रम्य मुहूर्तमात्रेण दवीयः कान्तारान्तर-मनायि। उत्खातिन्यां भूमौ रश्मिसंयमनान्मन्दीभूते रथवेगे प्रयत्नप्रेक्षणीयतया संवृत्तः स मृगः समभूमिं प्राप्य मुक्तेषु रश्मिषु निरायतपूर्वकायैः निभृतोर्ध्वकर्णैः सारङ्गजवाक्षमयेव द्रुतं धावद्भि-स्तुरङ्गैस्त्वरया नीयमाने रथे नयनपथं प्राविक्षत्। तं प्रहर्तुमुद्युक्तो बभूव राजा। शरपुङ्खनिहितहस्ते तस्मिन् ससम्भ्रममन्तरागतै-स्तपस्विभिरुद्यतहस्तैः 'भो भो आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः' इत्युच्चैरुदघुष्यत। राजा झटिति शरं प्रतिसञ्जहार॥

तेन तुष्टास्तपस्विनः 'राजन् सदृशमेतत् पुरुवंशप्रदीपस्य भवतः। एवंगुणोपेतं चक्रवर्तिनं पुत्रमाप्नुहि' इति राजानमाशिषा-योजयामासुः। अवादिषुश्च सादरम्—'राजन्, समिदाहरणाय प्रस्थिता वयम्। एष कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो

दृश्यते। यदि नान्यकार्यातिपातः तत्प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः' इति। 'अपि सन्निहितोऽत्र कुलपतिः' इति राज्ञा पृष्टास्ते 'इदानीमेव शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः' इत्यावेद्य प्रययुः॥

मुनिकुमारकाणां वचः शिरसाभिनन्द्य राजा 'भवतु, तामेव द्रक्ष्यामि। सा मां विदितभक्तिं महर्षेः कथयिष्यति' इत्याकलयन् रथमाश्रमाभिमुखमनैषीत्। मा भूत् तपोवनवासिनामुपरोध इति दूरत एव रथादवरुह्य विनीतवेषो बाहुस्फुरणावेदितशुभफलः प्रशान्तरमणीयमाश्रमपदं प्रविवेश। निःशब्दगम्भीरे तस्मिन् तपोवनाभोगे दक्षिणेन वृक्षवाटिकामालापमिव श्रुत्वा निभृतमुपसर्पन् राजा स्वप्रमाणानुरूपैः सेचनघटैः बालपादपेभ्यः पयो दातुमभिवर्तमानास्तिस्रस्तपस्विकन्यकाः समवैक्षत। मधुरेण तासां दर्शनेन विस्मितो राजा 'अहो उद्यानलतातिशायिन्यो वनलताः' इति स्वयं मनस्यकरोत्॥

परिहासालापपुरःसरं जलसेचनं कुर्वतीनां तासां विलासाः परं कौतुकमजनयन् राज्ञश्चेतसि। प्रियंवदायाः प्रियं वचनम्, अनसूयाया असूयारहितं मन्त्रितम्, शकुन्तलाया नेत्रनिर्वाणं रूपं च मृगयाक्रान्तं राज्ञः स्वान्तं नवीचकार। शकुन्तलाया वयसोऽननुरूपमपि वल्कलमनल्पामलङ्कारश्रियमपुष्णात्। अव्याजमनोहरेण तस्याः सौन्दर्येण सन्दानितहृदयोऽपि राजा—'किमेषा स्पर्शक्षमा उताहो न' इत्यव्यवस्यन् क्षणं सन्देहान्दोलितहृदयो बभूव। तदनु

तस्यां प्रवृत्तं स्वीयमार्यं हृदयमेव प्रमाणीकृत्य न खलु परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तत इत्याकलय्य तां क्षत्रपरिग्रहक्षमां निरचैषीत् । अथापि तत्वतस्तामुपलिप्सुस्तरुविटपान्तरितः प्रत्यपालयत् ।

तथापवार्य तिष्ठति राजनि सलिलसेकसम्भ्रान्तेन मधुकरेणाभिभूता शकुन्तला 'हला परीत्रायेथाम' इत्याचक्रन्द । 'के आवां त्रातुम् दुष्यन्तमाक्रन्द । राजरक्षितानि तपोवनानि नाम' इति सपरिहासं सख्यावाचख्यतुः । राजा लब्धावसरस्तपोवनरक्षणव्याजेन—'कः पौरवे वसुमतीं शासति मुग्धासु तपस्विकन्यकास्वविनयमाचरति' इति वदन्नात्मानं दर्शयामास । राजानं दृष्ट्वा तपस्विकन्यकाः किञ्चिदिव सम्भ्रान्ता अभूवन् । तद्दर्शनेन शकुन्तला तपोवनविरोधिनो विकारस्य गमनीया संवृत्ता । लज्जापहृतहृदया सा स्वनियोगमपि विसस्मार । सखीभ्यां प्रचोदितापि न राजानमुचितेन विधिना सत्कर्तुमपारयत् । राजा तु तासामासेचनकेन दर्शनेन सूनृतेन वचनेन च कृतातिथ्यमात्मानं न्यवेदयत् । शकुन्तलाया हृदयेनेव सम्मन्त्रिता मधुरालापजनितविस्रम्भा राजानमनसूया पप्रच्छ—'कतम आर्येण राजर्षिवंशोऽलंक्रियते? कतमो वा विरहपर्युत्सुकः कृतो देशः? किं निमित्तं वा तपोवनागमनस्यात्मा पात्रतामुपनीतः?' इति राजा त्वात्मानं पौरवेण राज्ञा धर्माधिकारे नियुक्तं तपस्विनामविघ्नक्रियोपलम्भाय धर्मारण्यमागतं च न्यवेदयत् ॥

अनन्तरं राजा समुत्पन्नकुतूहलः सख्यावपृच्छत्—'तत्रभवान् काश्यपः शाश्वते ब्रह्मणि स्थित इति नः प्रकाशः। इयं च वः सखी तदात्मजेति कथमेतत्' इति। सख्यावब्रूताम्—शृणोत्वार्यः, अस्ति कोऽपि कौशिक इति गोत्रनामधेयः प्रभाववान् राजर्षिः। एकदा गौतमीतीरे तस्य राजर्षेरुग्रे तपसि वर्तमानस्य नियमविघ्नकारिणी मेनका नामाप्सराः प्रेषिता अन्यसमाधिभीरुणा देवराजेन। सा च तं तपस्विनमुपेत्य स्वीयैः किलकिञ्चितादिभिस्तदीयं हृदयं समाक्रष्टुमयतिष्ट। ततः सकलजनमनोहारिणि वसन्तावतारसमये स महर्षिस्तस्या उन्मादयितृकं रूपमवलोक्य—इत्यभिदधानायां तस्यां तदीयं वचनमाक्षिप्य क्षितिपतिः 'परस्താज्ज्ञायत एव' इति सस्मितं ब्रुवाणः शकुन्तलामप्सरःसम्भवां विज्ञाय दिष्ट्या लब्धावकाशमात्मनो मनोरथं मेने। भूयोऽप्यात्मनः सन्देहशेषमपनयन् किमपि वक्तुकाम इवाभवद्राजा। तं तथाविधमवलोक्य 'आर्य, अनियन्त्रणानुयोगस्तपस्विजनो नाम। तत् पृच्छयतां प्रष्टव्यमात्मनश्छन्देन' इत्यवादीत् प्रियंवदा। तन्निशम्य प्रीतहृदयो राजा 'किमियमाप्रदानात् वैखानसं व्रतमाश्रयिष्यति, आहोस्विदत्यन्तमेव हरिणाङ्गनाभिः समं निवत्स्यति' इत्यप्राक्षीत्। अस्या अनुरूपाय वराय प्रदाने गुरोः सङ्कल्प इति तस्याः प्रतिवचनं राज्ञो हृदयमाह्लादयामास। अग्नित्वेनाशङ्कितं वस्तु निस्तुलं रत्नमिति वस्तुतोऽज्ञासीत्॥

कथाप्रसङ्गेनानेन लज्जायाः परां काष्ठामारूढा शकुन्तला राज्ञः पुरोऽवस्थातुमशक्नुवती गमनोद्युक्तेवासीत्। प्रियंवदा तां निरुध्य—

'सखि, वृक्षसेचने मे द्वे धारयसि। एहि तावत्। आत्मानं मोचयित्वा ततो गमिष्यसि' इति सव्याजमवोचत्। तदाकर्ण्य राजा परक्लेशासहन इव—'भद्रे वृक्षसेचनादेव नितान्तं परिश्रान्ता दृश्यतेऽत्रभवती। तदहमेनामनृणां करोमि' इत्यभिधाय स्वीय-मङ्गुलीयकं प्रियंवदायाः करे ददौ। सख्यौ नाममुद्राक्षराण्यनुवाच्य परस्परं सशङ्कमवलोकयतः स्म। तयोः शङ्कामपनयन् राजा—'अलमन्यथा सम्भाव्य। राज्ञः परिग्रहोऽयम्। मां च राजपुरुष-मवगच्छतम्' इति व्याचख्यौ। एवं तर्हि नैतदार्यस्याङ्गुलिवियोग-मर्हतीत्याभाष्य ते तत् तस्मै प्रत्यार्पयताम्' अवोचतां च शकुन्तलाम्—'सखि, मोचितास्यनुकम्पिनार्येण। अथापि न युक्तं तेऽकृतसत्कारमतिथिविशेषं विसर्जयितुम्' इति।

मधुरमिमं कथाप्रसङ्गं विघटयन् मूर्तो विघ्न इव वन्यो दन्तावलः कश्चिद्दन्तेन तरुविटपान् विपाटयन् पादेन च व्रतति-वलयानाकर्षन्नुद्धतं वल्गमानो विकसत्कुसुमलतामेदुरं तपोवनं व्यालोडयामास। तेन व्याकुलीभूता मुनयः—'भोभोस्तपस्विनः, तपोवनरक्षायै सावधाना भवत। प्रत्यासन्नः किल मृगयाविहारी दुष्यन्तः। स्यन्दनालोकभीतो मतङ्गजस्तपोवनमास्कन्दयति' इत्युच्चैः कोलाहलं चक्रुः। तमाकर्ण्य राजा—'हन्त! अस्मदन्वेषिणः सैनिकास्तपोवनमुपरुन्धते' इति मनस्यखिद्यत। सम्भ्रान्ते सख्यावुटजगमनाय राजानमनुमतिमयाचताम्। राजापि—'गच्छन्तु भवत्यः। वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे'

इत्यभयवचनमुदीर्य तासां गमनमन्वमन्यत। स्वयं च स्वीयमावासं गत्वा शकुन्तलागतहृदयो जाग्रदेव निशां निन्ये॥

अन्येद्युः प्रभाते मृगयाप्रसङ्गादुद्विग्नो विदूषकः—'कष्टं भोः कष्टम्। एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि। अयं मृगः, अयं वराहः, अयं शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलच्छायासु वनराजिष्वाहिण्ड्यतेऽटवीतोऽटवी। पत्रसङ्करकषायाणि कटुष्णानि गिरिनदीजलानि पीयन्ते। अनियतवेलं शूल्यमांसभूयिष्ठ आहारो भुज्यते। तुरगानुधावनकण्डितसन्धे रात्रावपि निकामं शयितव्यं नास्ति। ततो महति प्रत्यूषे दास्याःपुत्रैः शकुनिलुब्धकैः वनग्रहणकोलाहलेन प्रबोधितो भवामि। इयतेदानीमपि पीडा न निष्क्रामति। ह्यः किल मृगानुसारेण तपोवनं प्रविष्टस्य शकुन्तला नाम तापसकन्यका ममाधन्यतया दृष्टिगोचरे पतिता। साम्प्रतं न कथमपि नगरगमनाय मतिं करोति' इत्यात्मनो दुःखमात्मानमेव कथयन् विश्रान्तिलिप्सया राजानं द्रष्टुकामः प्रतस्थे। यवनीभिः परीवृतमभिमुखमागच्छन्तं राजानमवलोक्य स्वयमङ्गभङ्गविकल इव भूत्वा दण्डकाष्ठमवलम्ब्य तस्थौ॥

उपगतं च राजानमकृतोपचारः सदैन्यमवोचत्—'वयस्य, न मे हस्तपादं प्रसरति। तद्वाङ्मात्रेण ते जयशब्दमुदीरयामि' इति। कुतोऽयं गात्रोपघात इति पृष्टवन्तं राजानं भूयः सोद्वेगमाचष्ट—वयस्य, कुतः स्वयमक्षिणी व्याकुलीकृत्य बाष्पकारणं पृच्छसि?

एवं राजकार्याणि परित्यज्य त्वया वनचरवृत्तिना भवितव्यम्। यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः प्रक्षुभितसन्धिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः। तत् प्रसादये त्वामेकाहमपि वा विश्रान्तिदानेन मां विसर्जयितुम्' इति। राजा तद्वचनमाकर्ण्य—'अनुल्लङ्घनीयं सुहृद्वाक्यम्। तदनुमन्ये तव विश्रान्तिम्। किन्तु विश्रान्तेन भवता ममैकस्मिन्ननायासे कर्मणि सहायेन भवितव्यम्' इत्यवोचत्॥

एवं वदति तस्मिन् सेनापतिः प्रविश्य—'जयतु, महाराजः। गृहीतश्वापदमरण्यम्। किमद्यापि स्थीयते। प्रस्थीयतां मृगयार्थम्' इति विज्ञापयामास। तं तथावदन्तमधिक्षिपन् विदूषकः सरोषमभ्यधात्—'ध्वंसतां त उत्साहवृत्तान्तः। त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णर्क्षस्य मुखे पतिष्यसि' इति। आश्रमललामाकृष्टहृदयाय राज्ञे न मृगयाटनं नाप्यन्यदरोचिष्ट। अतः सव्याजं सेनापतिमवादीत्—'सेनापते, वयं मृगयापवादिना माढव्येन भग्नोत्साहाः कृताः स्मः। अपरं च वयमाश्रमस्य सन्निकृष्टे स्थिताः स्मः। अतस्ते वचनं नाभिनन्दामः। तदद्य विश्राम्यन्तु सर्वे सैनिकाः। परं यथा न ते तपोवनमुपरोत्स्यन्ति तथा त्वया द्रष्टव्यम्' इति। तथाभिहितः सेनापतिः—'यथाज्ञापयति स्वामी' इत्युक्त्वा निर्जगाम॥

अनन्तरं रैवतकप्रभृतीन् तन्नियोगानुष्ठानाय विसृज्य निर्मक्षिकं कृत्वा राजा विदूषकेण पादपच्छायायामुपविश्य तस्मै शकुन्तला-

वृत्तान्तं विस्तरेण प्रास्तौषीत्। अब्रवीच्च—'सखे, अनवाप्तचक्षुःफलोऽसि येन त्वया दर्शनीयं न दृष्टम्' इति। विदूषकः सोपहासमवोचत्—'ननु भवानग्रतो मे वर्तते' इति। तन्निशम्य स्मयमानो राजा—'सखे सर्वः कान्तमात्मानं पश्यति। अहं त्वाश्रमालङ्कारभूतां शकुन्तलामधिकृत्य ब्रवीमि। सा खलु धातुरदृष्टपूर्वा कापि लावण्यसृष्टिः' इत्यवदत्। अवर्णयच्च तया प्रदर्शितानि तानि तान्यनुरागचिह्नानि। तत्सर्वमाकर्ण्य विदूषकः—'तेन हि सत्वरं तां परित्रायतां भवान् यावन्न सा कस्यापि वनौकसो हस्ते पतिष्यति' इत्यब्रवीत्। 'सत्यमुक्तं भवता। परं चिन्तयन्नपि न जानामि केनापदेशेन मया सकृदप्याश्रमपदः प्रवेष्टव्यः' इत्यभिदधति राजनि द्वौ मुनिकुमारकौ समुपसृत्य—'राजन्, विदितो भवानाश्रमसदामिहस्थः। तेन ते भवन्तं प्रार्थयन्ते तत्रभवतः काश्यपस्य महर्षेरसन्निधानात् रक्षांसि न इष्टिविघ्नमुत्पादयन्ति। तत् कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रमः' इति न्यवेदयताम्। राजा सप्रश्रयमनुगृहीतोऽस्मीत्युक्त्वा स्वमनोरथानुरूपया तेषां प्रार्थनया कृतार्थमात्मानं मेने। आज्ञाप्य च सारथिं सबाणासनस्य रथस्योपस्थापनाय स्वयं प्रस्थानाय सज्जीभवन् 'गच्छतां पुरो भवन्तौ। अयमहमागत एव' इति ब्रुवन् मुनिकुमारकौ विससर्ज॥

गतयोश्च मुनिकुमारकयोः राजा—'माढव्य, अप्यस्ति शकुन्तलादर्शने कौतूहलम्?' इत्यप्राक्षीत्। माढव्यस्तु प्रवातदीप इव वेपमानसर्वावयवः—'प्रथमं सपरिवाहमासीत्। इदानीं

राक्षसवृत्तान्तेन विन्दुरपि नावशेषितः' इत्यब्रवीत्। अवसरेऽस्मिन् नगरात् देवीनामाज्ञप्तिहरः करभकः समेत्य जयशब्दमुदीर्य राजानं व्यजिज्ञपत्—'देव, देव्य आज्ञापयन्ति आगामिनि चतुर्थे दिवसे निर्वृत्तपारण उपवासो भविष्यति। तस्मिन् दिने दीर्घायुषाऽवश्यं सन्निहितेन भवितव्यम्' इति। तदाकर्ण्य राजा इतस्तपस्विकार्य-मितो गुरुजनाज्ञा किमत्र प्रतिविधातव्यमिति द्वैधीभूतचेताः क्षणं त्रिशङ्कोरवस्थामन्वभूत्। अथ विचिन्त्य माढव्यमवोचत्—'सखे, त्वमम्बाभिः पुत्रत्वेन परिगृहीतः। स भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रानस्मान्निवेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति' इति। एवमभिधाय राजा तपोवनोपरोधपरिजिहीर्षया सर्वेषा-मानुयात्रिकाणां प्रस्थापनाय सेनापतिमाज्ञापयामास। आनुयात्रिकैः साकं प्रस्थितो विदूषकः परं प्रहर्षमारूढो नृत्यन् युवराजोऽस्मीदानीं संप्रवृत्त इति वदन् राजानमापृच्छत। चपलोऽयं वटुः कदाचि-च्छकुन्तलोदन्तमन्तःपुरेभ्यः कथयेदित्याशङ्क्य राजा विदूषकं हस्ते गृहीत्वा—'वयस्य, महर्षिगौरवादाश्रमं गच्छामि। न खलु सत्यमेव तपस्विकन्यकायां ममाभिलाषः' इत्यवोचत्। सशिरःकम्पम् 'अथ किम्' इत्युक्त्वा विदूषकः सपरिवारो निष्क्रान्तः। राजापि सारथिनोपस्थापितं रथमारुह्य तपोवनं प्राविक्षत्।

आश्रमाभोगानधिवसन्नधिज्यशरासनो राजा ज्याशब्देनैव निघ्नन्निघ्नविघ्नान् मुदितैर्मुनिजनैराद्रियमाणः कतिपयान्यहानि तपोवनमध्यतिष्ठत्। शकुन्तला दुष्यन्तस्य दर्शनात् प्रभृति व्याकुलीभूतहृदया तद्गतया चिन्तया बलवदस्वस्थशरीरा संवृत्ता।

राजापि शकुन्तलाव्याधिना परामृष्टः संस्थिते कर्मणि सदस्यैरनुज्ञातः क्लान्तमात्मानं विनोदयितुं प्रियादर्शनादृतेऽन्यच्छरणमनवेक्षमाण-स्तामेवान्विष्यंस्तपोवनाभ्यन्तरे विचचार। उग्रातपवेलां तां लतावलयवत्सु मालिनीतीरेषु ससखीजना सा गमयतीत्यवगत्य सकुतूहलस्तमुद्देशं जगाम। सा तत्र वेतसपरिक्षिप्तं लतामण्डपं प्रविष्टेति पदचिह्नैरुत्प्रेक्ष्य तदन्तिकमुपसृत्यापवार्य स्थितस्तासां विस्रम्भकथितान्यश्रौषीत्। 'सखि, बलवदस्वस्थशरीरासि। अनुदिवसं परिहीयसेऽङ्गैः। किन्निमित्तोऽयमायासः। विकारं खलु परमार्थतोऽज्ञात्वाऽनारम्भः प्रतीकारस्य। स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति। तत् कथय तावदाधिहेतुम्' इति समदुःखसुखेन सखीजनेन पृष्टा सा लज्जाविवशाप्यात्मनः सन्तापस्य कारणं दुष्यन्त ति मुक्तकण्ठमवोचत्। सख्यौ तस्या अनुरूपमभि-निवेशमभिनन्दन्त्यौ 'सागरं वर्जयित्वा कुत्र वा महानद्यवतरति। क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितामर्हति' इति वदन्त्यौ व्याधेः प्रतीकारमाश्रम एव सन्निहितं ज्ञात्वा लब्धाश्वासे अभूताम्। परं स केनोपायेनाधिगतार्थः कर्तव्य इति विचिन्त्य मदनलेखप्रेषणमेव सुकुमारमुपायमपश्यताम्। ततस्याभ्या-मभ्यर्थिता शकुन्तला दीर्घं विचिन्त्य सुकुमारे नलिनीपत्रे—

तव न जाने हृदयं
मम पुनः कामो दिवापि रात्रिमपि।
निर्घृण तपति बलीय-
स्त्वयि युक्तमनोरथान्यङ्गानि॥

इतीमं ललितबन्धं सरलार्थं पद्यं नखैर्विन्यस्ताक्षरमकरोत् । समर्पयन्ती च लेखं तयोर्हस्ते—'सख्यौ, अवधीरणभीरुकं मे हृदयम्' इत्यवोचत् । तन्निशम्य—'अयि, आत्मावमानिनि, किमेवं कातरासि? क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयेत्' इति सख्यौ तामाश्वासयामासतुः। राजाऽपि–'लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमीप्सितो जनः' इति वदँल्लतामण्डपं प्रविवेश। सख्यौ सहर्षमविलम्बिने मनोरथाय स्वागतं व्याजह्रतुः ॥

अथ मुहूर्तेन गौतमी कण्वस्य कुलपतेरुच्छ्वासितायमानां शकुन्तलां बलवदस्वस्थशरीरां श्रुत्वा तद्वृत्तान्तोपलम्भाय तमेव लतामण्डपमाजगाम। शकुन्तलयाऽभ्यर्थितो राजा लताविटपान्तरितस्तस्थौ। गौतमी शकुन्तलां दर्भोदकेनाभ्युक्ष्य—'भद्रे, निर्बाधं ते भविष्यति शरीरम्। एहि, उटजमेव गच्छामः' इत्युक्त्वा तामादाय प्रतस्थे। शकुन्तला लताविटपमामन्त्र्य दुःखदुःखेन निर्जगाम। राजाऽपि तस्याः निर्गमनेन निरालोकं लतामण्डपं परित्यज्य प्रस्थातुकामः—'भो राजन्, सायन्तने सवनकर्मणि समारब्धे वेदीं परितो भयमादधानाः पिशिताशनानां छायाश्चरन्ति' इति मुनीनामाक्रोशं श्रुत्वा 'अयमहमागत एव' इति ब्रुवन् द्रुतगतिराश्रमाभिमुखं जगाम ॥

अथ कतिपयेभ्यो दिवसेभ्यः परमिष्टिं परिसमाप्य मुनिजनैर्विसृष्टः स राजर्षिर्नगरगमनाय प्रतस्थे। दुष्यन्तविरहकातरां

शकुन्तलां पुरस्कृत्य सख्यौ तमुपसृत्य सादरमवोचताम्—'महाराज, यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वहस्व' इति ॥

राजापि प्रियाविरहखेदाकुलस्तैस्तैः सत्यवचनैः सख्योः प्रत्ययमुत्पाद्य गुरुजनाद्भयमाशङ्कमानां शकुन्तलां हस्ते गृहीत्वा—'प्रिये, मा तावदेवं शङ्किष्ठाः। श्रूयन्ते हि बहवो राजन्यकन्यकाः शास्त्रानुशिष्टेन शिष्टानुमतेन गान्धर्वेण विधिना परिणीताः पितृभिश्च पश्चादभिनन्दिताः। तद्विदितधर्मा तत्रभवान् नात्र दोषं ग्रहीष्यति' इति सान्त्वयामास। अथ कियच्चिरेण मामितो नेष्यसीति पृष्टवत्याः पर्यश्रुलोचनायास्तस्याः कुसुममृदुलायामङ्गुलौ स्वीयमङ्गुलीयकं निवेशयन्—'प्रिये, प्रत्यहमत्रत्यमेकैकं नामाक्षरं गणय, यावदन्तं गच्छति तावत् त्वां मदन्तःपुरं नेता जनस्त्वदन्तिकमागमिष्यति। मा स्म खेदं गमः' इति मधुरवचनैः प्रसाद्य खिद्यमानमनाः कथञ्चिन्निर्जगाम ॥

यत्सत्यमिष्टजनप्रवासजनितं दुःखं सुदुःसहं भवत्यबलाजनस्य। यतो हि नगरं गते नरपतौ तद्विरहाकुला शकुन्तला शरीरेणाश्रमे सन्निहितापि हृदयेन दूरं गता व्यापारान्तरविमुखी बभूव। आश्रमैकदेशे क्वचित् वामहस्ततलविन्यस्तवदना आलिखितेव तस्थौ। एवंविधामवस्थां प्रतिपन्नायां तस्यां भवितव्यतायास्तादृशत्वात् सुलभकोपो दुर्वासास्तपोवनमुपेत्य—'अयमहं भोः' इत्युच्चैः शब्दायमान आत्मानमभ्यागतं न्यवेदयत्। न कश्चित् तं प्रयुज्जगाम।

तेन कुपितः स परितो निरूपयन् शून्यहृदयां शकुन्तलां दृष्ट्वा—आः अतिथिपरिभाविनि, 'यमनन्यमानसा विचिन्तयन्ती त्वं मां तपोधनमुपस्थितं न जानासि स जनः साधुबोधितोऽपि सन् न त्वां स्मरिष्यति' इति कोपानलकणकल्पानि शापाक्षराण्युज्जगार। प्रतस्थे च चटुलदुर्वारया गत्या। पुष्पावचयव्यापृते सख्यौ महर्षेः शापमाकर्ण्य परं व्याकुलीभावं जग्मतुः। सद्यः पुष्पावचयं परित्यज्य प्रियंवदा द्रुतगत्या धावन्तं महर्षिमनुगत्य प्रियवचनैरनुनयन्ती तं प्रत्यागमनाय प्रार्थयत। परं स प्रकृतिवक्रः कस्यानुनयं गृह्णाति। अथ तया पादयोः पतित्वा —'भगवन्, अविज्ञाततपःप्रभावस्य दुहितृजनस्यायमेकोऽपराधः सदय मृष्यताम्। न खलु पुष्पशिरस्त्रिवर्षं सहते' इति सप्रश्रयमभ्यर्थितः सानुक्रोशः सन् 'मुग्धे, न मे वचनमन्यथा भवति। किन्त्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यते' इति वदन्नेव प्रययौ। तेन वचनेन सख्यौ—'अस्ति राज्ञा दत्तमङ्गुलीयकं येन शुभोदर्कं भविष्यति शकुन्तलाया दैवम्' इति मत्वा लब्धाश्वासे अभूताम्। उष्णोदकेन नवमालिकासेचनमयुक्तमित्याकलय्य न ते शापवृत्तान्तं शकुन्तलायै न्यवेदयताम्॥

राजा यथाप्रतिज्ञं प्रियसखीं स्वीयां राजधानीं नेष्यतीति कांश्चिद्दिवसान् सहर्षमत्यवाहयतां सख्यौ॥ परं यदा चिरस्यापि कालस्य न लेखमात्रमपि व्यसृजत् तदा गरीयान् शोकस्तयोश्चेतसि पदं चकार। एकतो गुरुः सखीगामी दोषोऽयमिति वक्ष्यतीत्याधिना अपरतश्च प्रियसख्याः प्रतिकूलेन विधिना च मुषितमनसौ

काममप्यवस्थामन्वभूतां ते। नित्यमेव च भक्तिपुरःसरं शकुन्तलायाः सौभाग्यदेवतामर्चयामासतुः॥

अथ गतेषु केषुचिद्दिवसेषु काश्यपः प्रवासादुपावृत्तः प्रत्युपस्यग्निशरणं प्रविष्टश्छन्दोमय्या वाण्या शकुन्तलां दुष्यन्तपरिणीतामापन्नसत्वां च ज्ञात्वा हर्षनिर्भरहृदयो बभूव। गुणवते दुहिता प्रतिपादनीयेत्यासीत् तस्य सङ्कल्पः। स च स्वयमेव दैवेनोपस्थापितः। तेन स कृतार्थमात्मानं मेने। ततस्तस्यागमनं विज्ञाय महतौत्सुक्येन दर्शनार्थमागतां लज्जावनतवदनां दुहितरं परिष्वज्य तेनैवमभिहितम्—'दिष्ट्या धूमावरुद्धदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता। सुशिष्यपरिदत्ता विद्येवाशोचनीयासि संवृत्ता। राजर्षिपरिगृहीतां त्वामद्यैव भर्तुः सकाशं विसर्जयामि' इति। एवमभिधाय स शार्ङ्गरवशारद्वतौ गौतमीं च शकुन्तलया सह प्रस्थापयामास॥

ततः शिखामज्जितां शकुन्तलां नीवाराक्षतहस्तास्तपस्विन्यः परिवार्याभिनन्दन्त्यः—'जाते, भर्तुर्बहुमानसूचकं देवीशब्दं लभस्व। वत्से, वीरप्रसवा भव। भद्रे, भर्तुर्बहुमता भव। सुभगे, सुखमज्जनं ते भवतु' इत्येवंविधाभिराशीर्भिरन्वग्रहीषुः। सख्यौ च तस्याः पतिगृहं प्रति प्रस्थानसमये धारणाय कौतूहलेन चिरात् सज्जीकृतां कालान्तरक्षमां केसरमालिकां गोरोचनादीनि मङ्गलसमालम्भनानि चादाय समुत्सुकमनसावुपजग्मतुः। काश्यपस्य महर्षेरादेशात् वनस्पतिभ्यः कुसुमान्याहर्तुं गतौ द्वौ मुनिकुमारकौ वनदेवतावितीर्णानि विविधान्याभरणानि फेनधवलमृदुलं क्षौम-

युगलं चानीय प्रायच्छताम्। 'हला, अनया वनदेवतानामभ्युपपत्त्या सूचिता ते भर्तृगृहेऽनुभवितव्या राजलक्ष्मीः' इति वदन्त्यौ सख्यावनुपयुक्तभूषणे अपि चित्रकर्मपरिचयेन तत्तदङ्गेष्वाभरणानि विनियुज्य शकुन्तलां चारुतरमलञ्चक्रतुः। 'दुर्लभं मे सखीमण्डनं भविष्यति' इत्यालपन्ती शकुन्तला ताभ्यां क्रियमाणं प्रसाधनं सस्नेहं बह्वमन्यत। बाष्पाकुलनयनां तामवलोक्य सख्यौ नोचितं मङ्गलकाले रोदनमिति वदन्त्यौ तस्या अश्रूणि ममार्जतुः॥

ततः स्नानोत्तीर्णः काश्यपः शकुन्तलाविरहचिन्ताकुलः सखेदमुपावर्तमानः करुणरसबिन्दुसुन्दराण्यक्षराण्युज्जगार—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठःस्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।
वैक्लब्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः॥

अवसितमण्डनां शकुन्तलामादाय गौतमी आनन्दपरिवाहिणा चक्षुषा परिष्वजमानस्य गुरोः पादौ ग्राहयामास। काश्यपश्च बाष्पप्रसरावरुद्धकण्ठः—'वत्से, ययातेः शर्मिष्ठेव भर्तुर्बहुमता भव। सेव त्वमपि सम्राजं सुतमवाप्नुहि' इत्याशिषा संयोज्य तामादाय सद्यो हुतानग्नीन् प्रदक्षिणीकारयामास। आशास्त च—'वैतानास्त्वां वह्नयः पावयन्तु' इति॥

ततस्तां शार्ङ्गरवादिभिरादिश्यमानमार्गामाश्रमात् प्रस्थापयामास काश्यपः। आश्रमोपवने शकुन्तलया सोदरस्नेहेन

परिवर्धितान् तपोवनतरूनवलोकयतः कण्वस्य यत्सत्यं न हृदयकुहरे ममौ प्रमोदः। सर्वमेव तपोवनं करुणमयमिव पश्यतः काश्यपस्य महर्षेः शोकः श्लोकात्मना परिणमन् हृदयाद्विनिर्ययौ—भो भोस्तपोवनतरव,

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

एवं करुणमुद्गिरति तपस्विनि कलमधुरः कोकिलारवोऽश्रूयत—यः खलु शकुन्तलायाः पतिगृहगमनाय दत्ता वनवासबन्धूनां तरूणामनुमतिरिव व्यराजत ॥

आश्रमाभोगान् परित्यजन्त्याः शकुन्तलायाश्चरणौ क्लेशेन पुरः प्रवर्तेते। न केवलं शकुन्तलैव किन्तु कण्वोऽपि न केवलं कण्व एव किन्तु सखीजनोऽपि न केवलं सखीजन एव किन्तु मुनिजनोऽपि न केवलं मुनिजन एव किन्तु सर्वमपि तपोवनं करुणरसस्रोतसोह्यमानमिवालक्ष्यत। एकतो मृगा उद्गलितदर्भकवलाः सास्रया दृशा पश्यन्ति स्म। अपरतः परित्यक्तनृत्याः केकिनो मूकीभूतास्तिष्ठन्ति स्म। किं बहुना, निष्पतत्पाण्डुपत्रा लता अपि शकुन्तलाविरहविषादादश्रूणि मुञ्चन्त्य इवालक्ष्यन्त। शकुन्तला वनज्योत्स्नां लताभगिनीमुपसृत्य—'अद्य प्रभृति दूरवर्तिनी खलु ते भविष्यामि' इति वदन्ती तामश्रुबिन्दुभिः सिञ्चन्ती गाढमालि-

लिङ्ग। उटजपर्यन्तचारिणीं गर्भमन्थरां मृगवधूमवलोक्य—'तात, यदेयमनघप्रसवा भवति तदा मे किमपि प्रियनिवेदयितृकं विसर्जय' इत्युक्तवतीमश्रुव्याकुलमुखीमात्मजाम्—'भवतु, नेदं विस्मरिष्यामि' इत्यवोचत्। ततः प्रस्थाय व्रजन्ती सा पश्चाद्वसनाञ्चललग्नेन मृगपोतकेन निरुद्धगतिः परावृत्य पश्यन्ती काश्यपेनाभ्यधायि—

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते॥

महता स्नेहेन परिवर्धितं तं मृगपोतमुद्धृत्य गाढं परिष्वज्य साश्रुनयना—'वत्स, किं सहवासपरित्यागिनीं मामनुसरसि। अचिरप्रसूतया जनन्या विनापि वर्धित एवासि। इदानीमपि त्वां मया विरहितं तातश्चिन्तयिष्यति' इत्यभिधाय तं निवर्त्य रुदती प्रस्थिता। साश्रुमुखीं तामवलोक्य काश्यपः—'वत्से, किमेवं विक्लवासि। विरतानुबन्धं कुरुष्व बाष्पम्। अस्मिन् नतोन्नतभूमिभागे मार्गे स्खलितपदा भविष्यसि। तन्निगृहाण शोकावेगम्' इति समाश्वास्य निष्पद्बाष्पधारां प्रियंवदामनसूयां च विलोक्य—'ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला। किमेवं रुदिथः' इत्यवोचत्।

ओदकान्तात् स्निग्धो जनोऽनुगन्तव्य इति स्मरणादाकमलिनीतटमनुव्रज्य काश्यपः सर्वान् क्षीरवृक्षच्छायायां मुहूर्तमवस्थाप्य

क्षणं विचिन्त्य राज्ञे युक्तरूपं सन्दिशन्नाह—'शार्ङ्गरव, त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः —

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥

एवमभिधाय शकुन्तलाभिमुखो भूत्वा—'वत्से, त्वमिदानीमनुशासनीयासि । प्रथममेव मया तवार्थे सङ्कल्पितमात्मसदृशं भर्तारं त्वं सुकृतैर्गतासि । त्वमितः पतिकुलं प्राप्य—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥

इत्युपदिश्य तां गाढं परिषस्वजे ॥

अनेन समयेन युगान्तमारूढं सवितारमवलोक्य—'जाते, परिहीयते, गमनवेला । उपरुध्यते च मे तपोऽनुष्ठानम् । गच्छ । शिवास्ते पन्थानः सन्तु' इत्यभिधाय तां शार्ङ्गरवादिभिः सह विसर्जयामास । सापि विरहकातरे सख्यौ गाढमालिङ्ग्य प्रतस्थे । ते च गमनोन्मुखीं ताम्—'सखि, अतिस्नेहः पापशङ्कीत्यभिधीयसे । यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत् ततोऽस्मा इदं

स्वनामधेयाङ्कितमङ्गुलीयकं दर्शय' इत्यवोचताम् । तेन तयोर्वचनेनाकम्पितमिवाभूत् तस्या हृदयम् । ववृधे च शोकावेगः । पदे पदे परावृत्य गच्छन्त्यास्तस्यां मार्ग एव प्रहितेक्षणः काश्यपो मुहूर्तं तत्रैव तस्थौ । वनराज्या अन्तरितायां तस्यां काश्यपः सखीभ्यां सह प्रतिनिवृत्तः प्रत्यर्पितन्यासमिव लघूकृतभारमात्मानमाकलयन् शकुन्तलाविरहेण शून्यीभूतं तपोवनं प्रविवेश ॥

शार्ङ्गरवादयः शकुन्तलया सह दुष्यन्तस्य प्रधाननगरं हस्तिनापुरं प्रापुः । मालिनीतरङ्गपावने प्रशान्तपवने तपोवने कृतवासौ शार्ङ्गरवशारद्वतौ नगरं दवानलपरीतं वनमिव तन्निवासिनं सुखसङ्गिमानिनं जनमशुचिमिव च पश्यन्तावपि राज्ञो धार्मिकतामनुचिन्तयन्तौ महता हर्षेण राजगृहद्वारमुपजग्मतुः । तेषामागमनं विदित्वा कञ्चुकी धर्मासनात् प्रतिनिवर्तमानं परिमुषितमानसं राजानमुपसृत्य –'जयतु देवः । एते खलु हिमवदुपत्यकारण्यवासिनः काश्यपसन्देशमादाय सस्त्रीकास्तपस्विनः प्राप्ताः' इति व्यजिज्ञपत्। राजा तमाजिज्ञपत्–'तेन हि मद्वचनादुच्यतामुपाध्यायः सोमरातः—अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव तपस्विजनदर्शनोचितमग्निशरणालिन्दं प्रवेशयितुमर्हसीति । एवमाज्ञाप्य राजा स्वयं प्रथममेव तत्र गत्वा तिष्ठन्नेव तेषामागमनं प्रत्यपालयत् । दुर्वासःशापबलात् विस्मृतशकुन्तलावृत्तान्तस्तेषामागमने कारणमजानन्—'किं नु तावद्भिर्विघ्नैस्तपस्विनां तपो दूषितं भवेत्, उत धर्मारण्यचरेषु प्राणिषु केनाचिदसच्चेष्टितं स्यात्, उताहो

राजापचरितैः वीरुधां प्रसवो विष्टम्भितः स्यात्' इत्येवं मनसा तत्तदुत्प्रेक्षमाणः सन्देहदोलामधिरूढो व्याकुलमतिस्तस्थौ ॥

धर्मज्ञः सोमरातो यथाविधि तपस्विनः सत्कृत्य सबहुमानं राजान्तिकमनैषीत्। अब्रवीच्च राजानम्—'महाराज, विधिवदभ्यर्चितास्तपस्विनः। कश्चिदेषामुपाध्यायसन्देशः। तं देवः श्रोतुमर्हति' इति। राजा सविनयमवहितोऽस्मीत्याख्याय कृताभिवन्दनो मुनिकुमारकास्यामुदीरितं जयशब्दं शिरसाभिनन्दन् प्राञ्जलिः—'अपि निर्विघ्नतपसो मुनयः? अपि भगवान् लोकानुग्रहाय कुशली काश्यपः?' इत्यप्राक्षीत्। शार्ङ्गरवः सादरं प्रत्यवोचत्—'राजन्, स्वसुखनिरभिलाषे लोकहेतोः खिद्यमाने सतां रक्षितरि त्वयि राज्यं कुर्वति कथङ्कारमुत्पद्येत धर्मक्रियाविघ्नः। न खलु तेजसां धाम्नि दिनमणौ भासमानेऽन्धकारः प्रसरति। आस्तां तावदेतत्। स्वाधीनकुशलस्तत्रभवानस्माकमुपाध्यायोऽनामयप्रश्नपूर्वकमिदमाह—किमाज्ञापयति भगवानिति सादरं पृच्छते राज्ञे शार्ङ्गरवः काश्यपस्य महर्षेः सन्देशमुपाहार्षीत्—'राजन्, त्वमर्हतां प्राग्रसरोऽसि। इयं शकुन्तला च मूर्तिमती सत्क्रियेव वर्तते। युवां तुल्यगुणौ वधूवरौ मिथः संयोजयन्निदानीं विधाता चिरस्य वाच्यादमुच्यत। यन्मिथः समयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमताऽनुज्ञातम्। तदिदानीमियमापन्नसत्वा प्रतिगृह्यतां सहधर्मचरणाय' इति।

दुर्वासःशापतिरोहितस्मृतिः क्षितिपतिः शार्ङ्गरवस्य वचः श्रुत्वा विस्मितः 'किमिदमुपन्यस्तम्?' इति प्रत्यवोचत्। अनेन

राज्ञः प्रतिवचनेन किञ्चिदाकुञ्चितमिवाभून्मुनिकुमारकस्य हृदयम्। अथापि स मुनिजनसाधारणीं सहनशीलतामनपहाय मृदुनैव वचसा निजगाद—'राजन्, भवन्तो हि लोकज्ञाः। भर्तृमतीं प्रमदां साध्वीमपि ज्ञातिकुलैकसंश्रयां लोको ह्यन्यथा विशङ्कते। तस्मादस्माकमुपाध्यायस्त्वत्परिणीतामिमां त्वत्समीप एव स्थितामिच्छति' इति। राजा सविस्मयः—'किं मयाऽत्रभवती परिणीतपूर्वा?' शार्ङ्गरवः किञ्चिदुत्पन्नरोषः—कोऽयं द्वेषः कृते कार्ये? किमर्थैषा धर्मं प्रति विमुखता? राजा—कुतोऽयमसत्कल्पनाप्रश्नः? शार्ङ्गरवः—'अमी विकाराः खल्वैश्वर्यमत्तेषु मूर्च्छन्ति'। विशेषेणाधिक्षिप्तोऽस्मीत्यभिधाय राजा तूष्णीं स्थितः॥

पावकसदृशेन दुष्यन्तस्य वचनोपन्यासेन दग्धमिवासीच्छकुन्तलाया हृदयम्। गौतमी राज्ञः प्रत्यायनाय—'जाते, मुहूर्तं मा लज्जस्व' इति वदन्ती तस्या अवगुण्ठनमपानयत्। राजा तल्लावण्याकृष्टहृदयोऽप्यधर्मभीरुः 'अनिर्वर्णनीयं परकलत्रम्' इत्याकलयन्नधोमुखस्तस्थौ। तथा तिष्ठन्तं तं भूयः शार्ङ्गरवः पप्रच्छ—'राजन्, किमिदं जोषमास्यते' इति। राजाब्रवीत्—'तपोधन, चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि। कथमिमामभिव्यक्तसत्वलक्षणां प्रतिपत्स्ये' इति। शार्ङ्गरवो भृशं कुपितः क्षमापतिं चोरस्य तुलामारोपयन् शरकल्पां गिरं प्रयुयुजे—'राजन्, मैवं कुरु। नैतदुचितं धर्मसीम्नस्तव। त्वया कृताभिमर्शामात्मनः सुतां सहर्षमनुमन्यमानो मनस्वी मुनिर्मा

तावदेवमवमन्यताम्; यः खलु मुष्टमर्थं प्रतिग्राहयन् दस्युमिव त्वां बहुमन्यते। मा नाम त्वया भूयतां कृतघ्नेन' इति। एवमतिपरुषं भाषमाणं तं शारद्वतः—शार्ङ्गरव, अलमुत्तरोत्तरेण' इति वदन् विरमयामास। उवाच च—'शकुन्तले, वक्तव्यमुक्तमस्माभिः। अत्रभवानेवमाह। दीयतामस्मै प्रत्ययवचनम्' इति एवमभिधाय विरराम॥

शकुन्तला दीर्घं निश्वस्य 'इदमवस्थान्तरं गते तादृशेऽनुरागे परिणय एव सन्देहे समुत्पन्ने किं वा स्मारितेन। कश्च मे दूराधिरोहिणो मनोरथस्यावकाशः। आत्मेदानीं शोचनीय इति व्यवसितमेतत्' इति मनसि कुर्वाणा साश्रुनयना राजानम् "आर्यपुत्र" इति सम्बोध्यानुपदमेव अथवा संशयित इदानीं परिणये नैष समुदाचार इति मन्वाना प्राह—'पौरव, न युक्तं नाम ते तदानीमाश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्य साम्प्रतमीदृशैरक्षरैः प्रत्याख्यातुम्' इति बाष्पधारां मुमोच। राजा कर्णौ पिधाय शान्तं पापमित्यभिधाय—'ललने, किमित्येवं कूलङ्कषा सिन्धुरिव त्वमात्मानमाविलयसि तटस्थं च पातयितुमीहसे' इत्यभ्यधात्। शकुन्तला सखीवचनमनुस्मरन्ती साश्वासेव राजानमाह—'भवतु, यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं प्रवृत्तं तर्ह्यभिज्ञानदर्शनेन तव सन्देहमपनेष्यामि' इति। तन्निशम्य सहर्षमुदारः कल्प इत्यभिहितवति राज्ञि शकुन्तला मुद्रास्थानं परामृश्याङ्गुलीयकमपश्यन्ती सविषादं गौतम्या मुखमवैक्षत। सम्भ्रान्ता गौतमी—

'नूनं शक्रावताराभ्यन्तरे शचीतीर्थं वन्दमानायास्तव हस्तात् परिभ्रष्टमङ्गुलीयकम्' इत्यवोचत्। 'इदं तावत् प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते' इति सोपहासं निजगाद राजा। विपरीतेन विधियोगेन विदीर्णहृदया शकुन्तला काशकुशमवलम्बमानेव भूयः प्रत्ययमुत्पादयन्ती राज्ञः समक्षमाश्रमे प्रवृत्तान् कांश्चित् वृत्तान्त-विशेषान् स्मारयन्ती निजगाद—नन्वेकस्मिन् दिवसे नवमालिका-मण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितमासीत्। तदा मे पुत्रकृतको दीर्घापाङ्गो नाम हरिणपोतक उपस्थितः। त्वया अयं तावत् प्रथमं पिबतु' इत्युदकेनोपच्छन्दितः सोऽपरिचयात् न तव हस्ताभ्याशमुपागतः। पश्चात् तस्मिन्नेव मया गृहीते सलिले तेन दर्शितः प्रणयः। तदा त्वमित्थं प्रहसितोऽसि—'सर्वः सगन्धेषु विश्वसिति। द्वावपि खलु युवामारण्यकौ' इति॥

शापव्यवहितस्मृतिः क्षितीशः शकुन्तलायास्तामिमां वचन-रचनां कृत्रिमां सृष्टिमकल्पयत्। अब्रवीच्च—'एवमादिभिरात्म-कार्यनिर्वर्तिनीनां योषितां वाङ्मधुभिराकृष्यन्ते विषयिणः' इति। 'महाभाग, नार्हस्येवं मन्त्रयितुम्। तपोवनवर्धितः खल्वनभिज्ञोऽयं जनः कैतवस्य' इत्यूचुषीं राजा गौतमीं प्रोवाच—'तापसवृद्धे, स्त्रीणामशिक्षितपटुत्वं नाम पक्षिजातावपि दृश्यते, किं पुनः प्रति-बोधवत्यां मनुष्यजातौ। किं न जानासि परभृताः स्वीयमपत्यजात-मुत्पतनात् पूर्वमन्यैर्द्विजैः पोषयन्तीति। कुतोऽधिगतमेतत् कौशलं ताभिः? केन ताः शिक्षिताः? कस्तासामाचार्यः? अतिविचित्रा

हि चातुरी महिलानाम्' इति। अविदितशापवृत्तान्ता शकुन्तला राजानमुल्लङ्घितमर्यादं मन्यमाना महता मन्युना विवशीकृता प्राह—'अनार्य, आत्मनो हृदयानुमानेन सर्वं पश्यसि। क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकरिष्यति' इति। तस्या अकैतवेन कोपेन सन्दिग्धबुद्धिर्भवन्नपि राजा धर्मोल्लङ्घन-भीरुराह—'भद्रे, प्रथितं दुष्यन्तस्य चरितम्' इति। तथाभि-हितवति राज्ञि शोकस्य परां कोटिमारूढा शकुन्तला—'हन्त स्वच्छन्दचारिणी कृतास्मि। याहमस्य मुखमधोः हृदयविषस्य हस्ताभ्याशमुपगता' इति वदन्ती मुक्तकण्ठं रुरोद। तथा रुदतीं तामवलोक्य शार्ङ्गरवः प्राह—'किमिदानीं रोदनेन। इत्थमात्म-कृतं चापलं दहति। एवमज्ञातहृदयेषु क्रियमाणा मैत्री वैरस्याय भवति' इति॥

सोल्लुण्ठनेन तस्य वचनेन कुण्ठितहृदयो राजा सकोपमाह—भोः किमत्रभवतीप्रत्ययादेवास्मान् संवृतदोषाक्षरैर्वचनैरधिक्षिपसि' इति। शार्ङ्गरवः—'राजन्, आजन्मनः शाठ्यमशिक्षितोऽयं तपस्विनीजनः। कथं तस्य वचनमप्रमाणीक्रियताम्। कथं च प्रमाणीक्रियतां भवादृशामुक्तिः। यैः खल्वधरोत्तरं श्रुतम। भवन्तो हि शैशवात् प्रभृति परातिसन्धानमेव परविद्यात्वेन परिशीलयन्ति। राजा—'भोः सत्यवदिन्, अभ्युपगतं तावदस्माभिरेवम्। किं पुनरिमामतिसन्धाय लभ्यते? शार्ङ्गरवः—विनिपातः। राजा—विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयमेतत्। शार्ङ्गरवः—'भो

राजन्, किमुत्तरोत्तरेण। अनुष्ठितो गुरोः सन्देशः। सैषा भवतः कान्ता त्यज वैनां गृहाण वा। दाराणां परिग्रहे परित्यागो वा भर्तारः प्रमाणम्। तन्न वयं भवन्तं नियन्तुमुत्सहामहे' इत्याभाष्य गौतमीमग्रतः कृत्वा शारद्वतेन सह प्रस्थितः। शकुन्तला रुदतीताननुजगाम। शार्ङ्गरवः सरोषं परावृत्य—'शकुन्तले, मैवं कार्षीः यदि ते चरितं यथा राजा कथयति तथा स्यात् तर्हि त्वमुत्सृष्ट-कुलमर्यादासि। न त्वया तातस्य प्रयोजनम्। नापि स त्वां प्रतिपत्स्यते। अथ त्वमात्मनः शुचि व्रतं जानासि तवात्र पतिगृहे दास्यमपि भूषावहं भवति। तस्मात् त्वमत्रैव तिष्ठ। साधयामो वयम्' इति शकुन्तलामभ्यधात्॥

राजा तद्वचनमाकर्ण्य किङ्कर्तव्यतामूढः कर्तव्यनिर्णयाय सोमरातमुपाध्यायं प्रार्थयमानः प्राह—'भवन्तमेवात्र गुरुलाघवं पृच्छामि। किमहं मूढः स्यामाहोस्विदेषा मिथ्यावदिनी स्यादिति संशये किं मे दारत्यागिता श्रेयसी उताहो परस्त्रीस्पर्श-पांसुलता?' इति। सोऽपि क्षणं विचिन्त्य प्राह—'यदि तावदेवं क्रियताम्। अत्र भवती तावदाप्रसवादस्मद्गृहे तिष्ठतु। कुत इदमुच्यत इति चेत्—'त्वं साधुभिरादिष्टः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति। स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति ततः प्रतिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि। विपर्यये तु पितुः समीपगमनमवस्थितमेव' इति। 'यथा गुरुभ्यो रोचते तथा क्रियताम्' इत्युक्तवति भूपतौ सोमरातः शकुन्तलामविरलबाष्प-

धाराविलां भगवति वसुधे, देहि मे विवरमिति सगद्गदं विलपन्तीं पुरस्कृत्य तपस्विभिः सह प्रस्थाय निरगात् ।

व्यतिकरेणानेन व्याकुलमतिर्नृपतिः किमिदमित्यव्यवस्यन् चिन्ताभारावनमितवदनः क्षणं तस्थौ । तथा तिष्ठति तस्मिन् आश्चर्यमाश्चर्यमित्युच्चैः शब्दायमानः सोमरातः ससम्भ्रममागत्य—'देव, अद्भुतं खलु संवृत्तम् । अप्सरस्तीर्थतीरात् परावृत्तेषु कण्वशिष्येषु सा बाला स्वानि भाग्यानि निन्दन्ती सोरस्ताडं क्रन्दितुं प्रवृत्ता चक्रन्द । तथा क्रन्दन्तीं तां स्त्रीसंस्थानमेकं ज्योतिरुत्क्षिप्य सहसा नभस्थलमारुरोह' इति न्यवेदयत् । तच्छ्रुत्वा समुत्पन्नविस्मयोऽपि राजा—'प्रागेव सोऽर्थः परित्यक्तोऽस्माभिः । किं वृथा तर्केणान्विष्यते । विश्राम्यतु भवान्' इत्यभिधाय बलवद्दूयमानमानसः शयनगृहं जगाम ॥

वस्तुतः शचीतीर्थे शकुन्तलाया हस्तात् परिभ्रष्टमासीदङ्गुलीयकम् । तच्च शक्रावताराभ्यन्तरवासिना केनचित् धीवरेणासादितम् । जालोद्गालादिभिः मत्स्यबन्धनोपायैः कुटुम्बभरणं कुर्वता तेनैकस्मिन् दिने शचीतीर्थाद्बद्धं रोहितमत्स्यं खण्डशः कल्पयता तस्योदराभ्यन्तरेऽङ्गुलीयकमिदमुपलब्धम् । तच्च विपण्यां विक्रयाय दर्शयन् समणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं विज्ञाय रक्षिभ्यां गृहीतोऽभवत् । रक्षिणौ तं महता हर्षेण—'रे कुम्भीलक, त्वमद्य गृध्रबलिर्वा भविष्यसि शुनो मुखं वा द्रक्ष्यसि' इति तर्जयन्तौ ताडयन्तौ च नागरिकस्यान्तिकं निन्यतुः । नागरिक-

स्तदङ्गुलीयकमादाय यथागमनं राज्ञे विज्ञापयामास । तदङ्गुलीयकमवलोक्य राजा स्मृतशकुन्तलावृत्तान्तः प्रकृतिगम्भीरोऽपि क्षणं पर्याकुलो भूत्वा अङ्गुलीयकमूल्यसम्मितं धनं नागरिकस्य हस्ते दत्वा 'अनेन धीवरं सम्भावय' इत्यादिश्य तं विससर्ज । नागरिकस्तद्दादाय प्रत्यागतः—'मुच्यतामयं जालोपजीवी । उपपन्नः खल्वङ्गुलीयस्यागमः' इत्युक्त्वा तं पारितोषिकेण सम्भावयामास । रक्षिणौ विस्मयापन्नौ—एष नामानुगृहीतो यः शूलादवरोप्य हस्तिस्कन्धे प्रतिष्ठापितः । अयमिदानीं नौ प्रियवयस्यः संवृत्तः' इति वदन्तौ प्रथमसौहृदं दृढीकर्तुकामौ तमादाय नागरिकेण सह शौण्डिकापणं जग्मतुः ॥

अङ्गुलीयकदर्शनेनाऽनुस्मृतशकुन्तलावृत्तान्तो राजा गलद्बाष्पधारस्तदेवाङ्गुलीयकं दर्शं दर्शं व्यलपत् । आलपच्च—अहो 'अङ्गुलीय, कथं नु खलु त्वं बन्धुरकोमलाङ्गुलिं तस्याः करं विहाय सलिले निमग्नमसि ? नूनमधन्यमसि । अल्पपुण्यमसि । अथवा त्वमचेतनमसि । अचेतनेन गुणो न लक्षित इति युक्तमेवैतत् । सचेतसा मया कस्मादवधीरिता मे प्रिया । सत्यमूढपूर्वा मया शकुन्तला हन्त मोहात् प्रत्यादिष्टा । गृहद्वारमागता लक्ष्मीः खलु मया मूढेन पादाहत्या तिरस्कृता' इत्येदन्यच्च प्रलपन् व्यलपत् । प्रभवता वैमनस्येनायासितो नगरे सर्वत्र वसन्तोत्सवाघोषं प्रत्यषेधयत् । अतिदूरं लङ्घितः शकुन्तलाव्याधिना राजकार्यावेक्षणाय धर्मासनं गन्तुमपारयन् वेत्रवतीमुखेन—'यत् प्रत्यवेक्षितं पौरकार्यं तत् पत्रमारोप्य प्रेष्यताम्' इत्यमात्याय सन्दिदेश ॥

अनवरतं मनसि विपरिवर्तमानशकुन्तलाशोकः क्वापि निर्वृतिमपश्यन् राजा विदूषकेण सह प्रमदवनं जगाम। गत्वा च शिशिररमणीयं प्रदेशमध्यासीनः—'सखे, धिङ्मामुपस्थितश्रेयोऽवमानिनम्। सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमवृत्तान्तम्। निराकरणविक्लवायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि। सखे सा खलु मे प्रियतमा—

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता
मुहुस्तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम्'॥

इति वदन् पर्यश्रुलोचनो विललाप। राजानं तथाविधमवलोक्य विदूषकः—'भोः किमेतत्। असदृशं खल्वीदृशं तव। न जातु सत्पुरुषाः शोकपात्रात्मानो भवन्ति। ननु प्रवातेऽपि निष्कम्पा गिरयः। भवितव्यता खलु बलवती' इत्याश्वासयामास। परं न राजा तैरुपदेशवचनैः प्रकृतिं प्रापद्यत। चित्रफलके स्वहस्तलिखितां शकुन्तलायाः प्रतिकृतिमानाय्य तां सानुनयं प्रसादयामास। साक्षादुपगतां प्रियामपहाय चित्रगतां तामनुनयन् राजा पुरस्तादुपस्थितां निकामजलां नदीमतिक्रम्य मृगतृष्णिकामनुधावतस्तुलामारुरोह। अपृच्छच्च विदूषकम्—'अहं खलु सर्वं शकुन्तलावृत्तान्तं कथितवानस्मि भवते। स भवान् प्रत्यादेशसमये समीपगतो नासीत्। किन्तु पूर्वमपि न त्वया कदाचित् सङ्कीर्तितं तत्रभवत्या नामापि।

कच्चिदहमिव भवानपि विस्मृतवान्' इति एवमभिधाय विरतवचसि राज्ञि विदूषकः प्राह—'सखे, न विस्मरामि। किन्तु सर्वं कथयित्वाऽवसाने पुनस्त्वया भणितम्—परिहासविजल्पित एषः, न भूतार्थ इति। मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम्। अथवा बलवती भवितव्यतैवात्र कारणम्' इति॥

राजानमस्वस्थहृदयं विदित्वा राज्ञी सुखपृच्छिका तदन्तिकं प्रतस्थे। तदागमनवृत्तान्तं प्रथमागतायाश्चतुरिकाया मुखाद्विज्ञाय राजा चित्रफलकं प्रच्छादयितुकामो विदूषकस्य हस्ते दत्वा तं मेघप्रतिच्छन्दाख्यं प्रासादं प्रेषयामास। राज्ञी तु शासनपत्रमादाय राज्ञः सन्निधमागच्छन्तीं वेत्रवतीमवलोक्य मा भूद्राज्ञः कार्योपरोध इत्यर्धपथादेव प्रतिन्यवर्तत। वेत्रवती राजानुमुपसृत्य प्रधानामात्येन प्रेषितं शासनपत्रमर्पयामास। राजा तद्गृहीत्वाऽनुवाचयन्—'समुद्रव्यवहारी धनमित्रो नाम सार्थवाहः पोतभङ्गेन विपन्नः। सोऽनपत्य इति ज्ञायते। राजगामी तस्यार्थसञ्चयः' इत्यमात्यकृतं निर्णयं निरवर्णयत्। अकस्माच्छकुन्तलायाः प्रत्यादेशेन परिदूने तस्य हृदये बलवाननपत्यताखेदः पदं चकार। अकरोच्च मनसि—'हन्त सन्ततिविच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ति; ममाप्यन्ते पुरुवंशश्रिय एष एव वृत्तान्तः' इति। एवं विचिन्त्य राजा प्रतीहारीमाह—'वेत्रवति, मद्वचनादुच्यतां प्रधानामात्यः महाधनतया बहुपत्नीकेन भवितव्यं तत्रभवता धनमित्रेण। तदन्विष्यतां यदि काचिदापन्नसत्वा तस्य भार्यासु

स्यात्' इति। तन्निशम्य वेत्रवती प्राह—'देव, अस्ति तेन साकेतकस्य श्रेष्ठिनः सुता परिणीता। सा चापन्नसत्वा नातिचिरेण निर्वृत्तपुंसवना च मे विदिता' इति। तदाकर्ण्य लब्धाश्वासो नृपतिरमात्यस्य निर्णयं निरस्य साकेतकस्य वणिजः सुताया गर्भः पित्र्यं रिक्थमर्हतीति निर्णीय शासनपत्रममात्याय प्रेषयामास।

पत्रमादाय गतायां वेत्रवत्यां राजा बाष्पधारां विमुञ्चन्—'सखे, धिङ्मामुपस्थितश्रेयोऽवमानिनम्। मया खलु मन्दधिया तत्रभवत्युप्तबीजा महते फलाय कल्पिष्यमाणा वसुन्धरेव परित्यक्ता। हन्त दुष्यन्तस्य सन्ततिविकलस्य संशयमारूढाः पितरः प्रसूतिविकालादस्मात् परं कः खल्वस्माकं कुले निवापाञ्जलिं करिष्यतीति शोचन्तो मन्ये मयेदानीं दत्तमुदकं धौताश्रुशेषं पिबन्ति' इत्येतदन्यच्चाद्भिरन् शोकप्रवाहपतितोऽतिदूरमनीयत॥

शचीतीर्थसमीपात् केनाप्याकाशचारिणा नीता शकुन्तला प्रत्यादेशविमानितापि राज्ञः कृते क्लाम्यन्ती दिवसानतिवाहयति। भर्तृवियोगदुःखितां दुहितरं द्रष्टुमपारयन्ती मेनकापि विमनायमाना बभूव। तेन सर्वोऽप्यप्सरोलोकः शोके पतित आसीत्। पर्यायनिर्वर्तनीयमप्सरस्तीर्थसान्निध्यं निर्वर्तयितुं भुवमागता सानुमती नामाप्सराः कृतात्मपर्यायकृत्या दुष्यन्तस्य वृत्तान्तं प्रत्यक्षीकर्तुमागता तदन्तिकमुपसृत्य तिरस्करिणीप्रतिच्छन्ना भूत्वा राज्ञः समवस्थां ददर्श। दृष्ट्वा च तथा सन्तप्यन्तं राजानमभिननन्द शकुन्तलाया भागधेयानि। अथ तं किमपि किमपि विलप्य मोहमुपगतं दृष्ट्वा

सम्भ्रान्ता सा—'हा धिक्, सति खलु दीपे व्यवधानदोषेणाय-मन्धकारदोषमनुभवति। अहमिदानीमेवैनं परिगतार्थं कृत्वा निर्वृतं करोमि। अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्र-जनन्या मुखात् यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाऽ-चिरेण भर्ता धर्मपत्नीमभिनन्दिष्यतीति। तद्युक्तं प्रतिपालयितुम्। यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि' इति स्वयमभि-दधाना निर्जगाम ॥

अत्रान्तरे मेघप्रतिच्छन्दप्रासादगतो विदूषकः तारस्वरेण—'अब्रह्मण्यमब्रह्मण्यम्। परित्रायतां देवः संशयगतजीवितं वयस्यम्। अदृष्टरूपेण केनापि दुष्टसत्वेनाक्रम्य मेघप्रति-च्छन्दप्रासादस्याग्रभूमिमारोपितः बिडालगृहीतो मूषक इवास्मि संवृत्तः। शिशुपशुमारं मारितोऽस्मि' इत्याचक्रन्द। राजा माढव्यस्यैव स्वरयोगं जानन् झडित्युत्थाय न भेतव्यं न भेतव्यमिति वदन् सशरं धनुरादाय द्रुतगत्या तमुद्देशं जगाम। शून्यं प्रासाद-मवलोक्य सविस्मयोऽभवत्। समन्तादवलोकयन्तं राजानमवेक्ष्य विदूषकः—'अविहा अविहा अहमत्रभवन्तं पश्यामि। अत्रभवान् मां न पश्यति' इत्याक्रोशत्। राजा—'रे कुणपाशन, त्वमिदानीं न भविष्यसि' इति ब्रुवन् धनुषि शरं समधत्त। मातलिर्विदूषक-मुत्सृज्य तिरस्करिणीं परित्यज्य राज्ञः पुरस्तादाविर्भूय—'जयतु महाराजः। अहमस्मि मघवता भवत्सकाशं प्रेषितः। केनापि निमित्तेन मनःसन्तापाद्विक्लवतां गतं तत्रभवन्तमद्राक्षम्। दृष्ट्वा

च त्वां प्रकोपयितुकामो माढव्यं केशे गृहीतवानस्मि। श्रूयतामिदानीं देवपतेः सन्देशः—'अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः। स च क्रतुभुजामस्माकमजय्यस्त्वया रणशिरसि समुच्छेत्तव्यः' इत्यभाणीत्। अनुगृहीतोऽस्म्यनया मघवतः सम्भावनयेत्युक्त्वा राजा मन्त्रिष्वारोप्य राज्यभारं मातलिना सह प्रतस्थे॥

भयानके सुरासुरसम्पराये दुर्जयान् दानवान् लीलयैव विजिग्ये दुष्यन्तः। समूलकाषं कषिते दानवकुले विरते च समरव्यापारे पुरन्दरस्तं सादरं सत्कृत्य दिवौकसां समक्षमर्धासने समुपवेश्य हरिचन्दनोपचितपरिमलां मन्दारमालां तस्य कण्ठेऽर्पयामास। ततो मातलिना नीयमानं रथमारुह्य देवराजकृतं सत्क्रियाविशेषमेवाधिकृत्य सारथिना सह भाषमाणो नभोमार्गेणावततार। हेमकूटं नाम किंपुरुषपर्वतं सुरासुरगुरोः सपत्नीकस्य मारीचस्य महर्षेस्तपःस्थानमुपगतः—'अनतिक्रमणीयानि श्रेयांसीति भगवन्तं प्रदक्षिणीकृत्य गन्तुकामो रथं स्थापयित्वा ततोऽवततार। अवतीर्य च मन्दारवृक्षमनोहरं स्वर्गादधिकतरं निर्वृतिस्थानं तपसां सिद्धिक्षेत्रं तपोवनं प्रविवेश। प्रतिपाल्यावसरा मुनय इति मातलिः राजानमशोकवृक्षमूलेऽवस्थाप्य स्वयमिन्द्रगुरवे राजागमनं निवेदयितुमाश्रमाभिमुखं ययौ॥

राजाऽमृतह्रदमिवावगाढः प्रसन्नहृदयस्तपोवनस्य रमणीयकमवलोकयन् परितश्चक्षुः प्रेषयामास। अकरोच्च मनसि—'अहो

उत्सर्पिणी खलु महतां प्रार्थना। यदर्थमन्ये मुनयः परित्यक्तान्यव्यापारा नक्तन्दिवं तपस्तप्यन्ते तान्येव वस्तून्यमी तपस्विनस्तृणवदाकलयन्ति। तथाह्येते कामितार्थवितरणदक्षैः कल्पवृक्षैरलङ्कृतेऽस्मिन् वने पवनेन वृत्तिं कुर्वन्ति; काञ्चनपद्मरेणुकपिशे सलिले धर्माभिषेकक्रियां निर्वर्तयन्ति; रत्नशिलातलान्यध्यासीनाः सन्ततमेकाग्रमनसो ध्यायन्ति; विबुधस्त्रीणां सन्निधौ संयमं संश्रयन्ति; न खलु किञ्चित् दुष्करं नाम निगृहीतात्मनां महात्मनाम्। एवं चिन्तयतस्तस्य क्वचिदर्धपीतस्तनं सिंहशिशुं 'एहि सिंह, दन्तांस्ते गणयिष्यामि' इति बलादाकर्षन् कश्चिदबालसत्वो बालः दृष्टिपथं गतः। विषयान्तराद्विनिवृत्तं राज्ञश्चेतस्तस्मिन् सक्तमभूत्। मा चापलं कुर्विति तापसीभ्यां निवार्यमाणोऽप्यसौ बालस्तद्वचनं न कर्णे चकार। ततः प्रलोभनपरैर्वचनैस्ताभ्याम् 'वत्स, अन्यत् ते क्रीडनकं दास्यामि मुञ्च सिंहशिशुम्' इत्युक्तोऽसौ 'देहि, नान्यथैनं मुञ्चामि' इति वदन्नेव सिंहशिशुं बलात्पीडयामास। नायं वाङ्मात्रेण निवारयितुं शक्य इति तपस्विन्योरन्यतरा मृत्तिकामयूरायाश्रमं जगाम॥

तस्य शिशोरोजसा तेजसा च विस्मितो राजा नूनमयं कस्यापि महतस्तेजसो बीजं भवितुमर्हतीति मनस्यचिन्तयत्। भूयोऽपि बलात् सिंहशिशुं धर्षयितुमुद्यते तस्मिन् मुनिकुमारकानाकारयितुमुद्युक्ता तापसी नातिदूरे राजानमवलोक्य—'भद्रमुख, एहि तावत्। मोचयानेन डिम्भलीलया बाध्यमानं बालमृगेन्द्रम्' इति प्रार्थयत।

राजा सादरो भूत्वा—महर्षिपुत्र, इत्यामन्त्रयमाणो नालमुपससर्प। 'नायं महर्षिपुत्रः किन्तु राजर्षिपुत्रः पुरुवंशजातः' इति तापसी न्यवेदयत्। कथमेकान्वयो ममेति विस्मितोऽभूत् दुष्यन्तः॥

अपरा तापसी मृत्तिकामयूरमादाय प्रत्यागता—'सर्वदमन, प्रेक्षस्व शकुन्तलावण्यम्' इति मृत्तिकामयूरं दर्शयामास। बालः सहर्षम्—'कुत्र मे माता' इत्यपृच्छत्। बालस्यास्य मातुः शकुन्तलेति नामधेयं भवितुमर्हतीति तर्कयन्नपि राजा नामधेय-सदृशानि नामानि भवन्तीति कृत्वा प्रश्नकौतूहलादात्मानं निवारयामास॥

मृत्तिकामयूरग्रहणाय बालेन हस्ते प्रसारिते, 'हन्त रक्षा-करण्डकमस्य मणिबन्धे न दृश्यते' इति तापसी व्याकुलाभूत्। 'अलमावेगेन, नन्विदमस्य सिंहशावविमर्दात् परिभ्रष्टम्' इति वदन् राजा तापसीभ्यां ससम्भ्रमं निवारितोऽपि क्षितौ पतितं रक्षाकरण्डं स्वहस्तेन जग्राह। पप्रच्छ च तापस्यौ 'किमर्थं प्रतिषिद्धाः स्मः' इति। ते सविस्मयमब्रूताम्—'एषा तावदपराजिता नामौषधिः जातकर्मसमये भगवता मारीचेनास्य मणिबन्धे पिनद्धा। तामेतां मातापितरौ महर्षिं च वर्जयित्वा नान्यो भूमिगतां गृह्णाति। अथ गृह्णाति ततस्तं सर्पो भूत्वा दशति। परीक्षितश्चायमर्थो बहुशः' इत्युक्त्वा ते वृत्तान्तमिमं निवेदयितुं द्रुतगत्या शकुन्तलान्तिक-मगच्छताम्। बालोऽप्यनुगच्छन् राज्ञा बलादाकृष्य गाढमालिङ्ग्यत। बालः—'मुञ्च माम्। यावदम्बायाः सकाशं गच्छामि' इत्यवोचत्।

राजाह—'पुत्रक, मया सहैव गत्वा मातरमभिनन्दयिष्यसि' इति। बालः—'मम तातो दुष्यन्तः, न त्वम्। मुञ्च माम्' इति वदन् राज्ञो हस्तादात्मानं मोचयितुमयतिष्ट॥

तापसीभ्यां निवेदिता शकुन्तला द्रुतपदं राज्ञः समीपमाजगाम। राजा तामवलोक्य—'सेयमत्रभवती शकुन्तला' इति वदन् सानुशयः क्षणं तस्थौ। बालो मातरमपृच्छत्—'अम्ब, क एष पुरुषो मां पुत्र इत्यालिङ्गति?' शकुन्तला—'वत्स, तव भागधेयानि पृच्छ' इत्युक्त्वा बाष्पाकुलनयना बभूव। चिरविरहितां तां प्रत्युद्गन्तुमाविर्भूतेनेव नयनजलेनाप्लुतो राजा सानुनयमभाषत—'प्रिये, दूरीकुरु तावत् त्वत्प्रत्यादेशकृतं वैमनस्यम्। यदा त्वमाश्रमवासिभिर्मान्तिकमानीता तदा, न जाने किन्निमित्तकः, बलवान् कश्चिदासीत् सम्मोहो मम चेतसि। यथाऽन्धः शिरसि क्षिप्तां कुसुमस्रजमहिशङ्कया धुनोति तथा सम्मोहेनान्धीकृतोऽहमहितशङ्कया त्वां परित्यक्तवानस्मि' इत्येतैरन्यैश्च वचोभिस्तां प्रसादयामास। शकुन्तला सानुरागेण चक्षुषा राजानमवलोकयन्ती—'आर्यपुत्र, नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामोन्मुखमासीत्। तेन प्रकृत्या सानुक्रोशोऽप्यार्यपुत्रो मयि निरनुक्रोशः संवृत्तः। तन्नात्र विषादः कार्यः' इत्याश्वासयामास॥

अवसरेऽस्मिन् मातलिरागत्य—'एत्वायुष्मान्। भगवान् मारीचस्ते दर्शनं वितरति' इति न्यवेदयत्। राजा स्वतनयं हस्ते गृहीत्वा शकुन्तलां पुरस्कृत्य भगवन्तमुपगम्य प्रणम्य च प्राञ्जलिः

स्थित्वा विज्ञापयामास—'भगवन्, इमामाज्ञाकरीं गान्धर्वेण विधिनोपयस्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतः कुलपतेः कण्वस्य। पश्चादङ्गुलीयकदर्शनादूढपूर्वां तद्दुहितरं स्मृतवानस्मि। तच्चित्रमिव मे प्रतिभाति। न जाने स्वप्नो वा माया वा मतिभ्रमो वा' इति। एवं विज्ञापितवन्तं राजानं मारीचः—अलमपराधशङ्कयेत्यभिधाय तस्मै दुर्वासःशापवृत्तान्तं कथयामास। दिष्ट्या वचनीयान्मुक्तोऽस्मीत्यमन्यत राजा॥

वृत्तान्तमिमं मारीचः सद्य एव गालवमुखेन तत्रभवते कण्वमहर्षये सन्दिदेश। भगवता मारीचेनानुज्ञातो राजा सपुत्रदारः पुरन्दरस्य रथमारुह्य स्वीयां राजधानीं जगाम। सर्वदमनाख्यं भरतमात्मनः पुत्रं यौवराज्ये नियुज्य राजा शकुन्तलासचिवः प्रकृतिहिताय प्रवर्तमानश्चिरं प्रजाः प्रीत्या नीत्या च परिपालयामास॥



# A HISTORY OF VEDIC LITERATURE

## ॥ वैदिकसाहित्यचरित्रम् ॥

A FIRST BOOK OF ITS KIND IN SANSKRIT LITERATURE.

---

With a Foreword by Ganganath Jha, Vice-Chancellor of the Allahabad University.

---

Extract opinions of the above:—

...वैदिकसाहित्यचरितमासूलाग्रमतिदुरूहविषयपूर्णमत्यावश्यकं चेदमाधुनिकानां माणवकानां शिरोमण्यादिपरीक्षामुत्तितीर्षूणां पाश्चात्यसिद्धान्तं खण्डयतां पण्डितानां च...

महामहोपाध्याय-शास्त्ररत्नाकर विरूपाक्षशास्त्री.

---

... वैदिकसाहित्यचरितं अक्षरसौष्ठवादि गुणभूयिष्ठं अतिसरल-वाक्यरचनया रोचमानं प्रमोदयति नश्चेतोवृत्तिम् । अलसानामपि वेदप्रतिपाद्यार्थसंग्रहकतया स्वदिदृक्षामुत्पादयति ॥

महामहोपाध्याय-शास्त्ररत्नाकर यज्ञस्वामिशास्त्री.

---

अयं ग्रन्थः अत्यन्तोपकारकः । अत्र विषया पुनः संस्कृत-भाषयामेतावत्पर्यन्तं न केनापि संगृहीताः ॥

पण्डितराज पुञ्जइ

Ordinary Edition 2-12-0 Lib

R. S. VADHYAR & SONS, KAL